# प्रियदर्शिका नाटिका ।



—————०—————

महाकविश्रीहर्षप्रणीता ।

—:०:—

वि, ए, उपाधिधारिणा

श्रीजीवानन्द-विद्यासागर-भट्टाचार्य्य-

विरचित-टीका-समेता ।

तेनैव संस्कृता ।

—:०:—

कलिकाता—सत्ययन्त्रे

श्रीनृसिंहचन्द्र-सामध्यायिना मुद्रिता ।

सम्वत् १९३१ ।

॥ श्रीगणेशाय नमः ॥

# प्रियदर्शिकानाटिका ।

श्रीरस्तु

धूमव्याकुलदृष्टिरिन्दुकिरणैराह्लादिताक्षी पुनः
पश्यन्तीव समुत्सुका नतमुखी भूयो ह्रिया ब्रह्मणः ।
सेर्ष्या पादनखेन्दुदर्पणगते गङ्गान्दधाने हरे
स्पर्शादुत्पुलका करग्रहविधौ गौरी शिवायास्तु वः (१)॥१॥

अपिच । कैलाशाद्द्रागुदस्ते परिचलति गणेषूल्लसत्कौतुकेषु
क्रोडं मातुः कुमारे विशति विषमुचि प्रेक्ष्यमाणे सरोषम् ।
पादावष्टम्भसीदद्वपुषि दशमुखे याति पातालमूलं
क्रुद्धोप्याश्लिष्टमूर्तिर्भयधनसुमया पातु हृष्टः शिवो नः(२)॥२॥

---

(१)—सा गौरी वः युष्माकं शिवा कल्याणी अस्तु। या करग्रहविधौ कुशण्डिका-कर्म्मणि धूमव्याकुलदृष्टिः, पुनः इन्दुकिरणैः शिवललाटजैः आह्लादिताक्षी, भूयः समुत्सुका सती पश्यन्तीव ब्रह्मणः पुरोहितस्य ह्रिया लज्जया नतमुखी, तथा च पाद-नखेन्दुदर्पणगते गङ्गान्दधाने हरे दृष्टे सति सेर्ष्या, किञ्च तत्रैव पादनखे गङ्गासहितस्य पत्युः स्पर्शात् दर्पणगतस्पर्शबोधात् उत्पुलका ।

(२)--उल्लसत्कौतुकेषु गणेषु सत्सु, कैलाशात् द्राक् झटिति उदस्ते ऊर्द्ध्वांस्ता-

नान्द्यन्ते सूत्रधारः(३) [परिक्रम्य]

अद्याहं वसन्तोत्सवे स-बहुमानमाहूय नानादिग्देशागतेन राज्ञः श्रीहर्षदेवस्य पादपद्मोपजीविना राजसमूहेनोक्तः । यथास्मत्स्वामिनाऽपूर्व्ववस्तुरचनालङ्कृता प्रियदर्शिका नाम नाटिका(४)कृतेति अस्माभिः श्रोत्रपरम्परया श्रुता ।

---

चले परिचलति सति; मातुः क्रोड़ं कुमारे कार्तिकेये विशति सति; विषमुचि शिवाङ्गभूषणे सर्पे सरोषं प्रेचसार्थ, पादावष्टम्भसीददपुषि दशमुखे रावणे भयधनं भयागारं पातालमूलं याति सति क्रुद्धोऽपि शिवः उमया सह आश्लिष्टमूर्तिरत एव हृष्टः नः अस्मान् पातु । अत्र भीत्या उमाया आश्लेषः कुमारस्य क्रोड़े प्रवेशश्च, आश्लेषात् हर्षश्च ।

(३)—"देवद्विजनृपादीनामाशीर्वादपरायणाः नन्दन्ति देवता यस्मात्तस्मान्नान्दी प्रकीर्तिता,, किञ्च "आशीर्वच नमस्क्रिया च शशिनः सङ्कीर्तनं वस्तुनो, निर्देशो गुरुसंस्तुतिर्मधुलिहां मोदाय पुष्पाञ्जलिः । आद्यैर्द्वादशभिः पदैरथ समैर्यद्वाष्टभिर्निर्मिता, सद्वृत्तैः सुसन्धिना च कथिता नान्दीति सर्वागमे" ।

"सूत्रधारः पठत्यत्र मध्यमं स्वरमाश्रितः । नान्दीपदैर्द्वादशभिरष्टाभिर्वाप्यलङ्कृताम् ॥ नान्द्याः अन्ते सूत्रधारः प्रस्तावकः, कार्य्यार्थस्य स्थापनात् स्थापकनामा प्रधानोनटः प्रविश्य वदतीति शेषः ।

(४)—"कैशिकी-वृत्तिसंयुक्ता नारीपरिजनोज्ज्वला । चतुर्थं सन्धिहीना च नाटिका नृपनायिका ॥ इयं शृङ्गारबहुला ततः स्यात् कैशिकी मयी । स्त्रीयं कैशिकी वृत्तिर्नस्यादन्यरसाश्रया । न कुञ्जरकराघातमात्रं शक्नोति कन्दली । तास्यां विटः पीठमर्दः सचयोवाथ सचयः । अन्तःपुरचरीराज्ञ ईषद्विद्योविदूषकः । अत्र भार्य्याजितोराजा निभृतः काममाचरेत् । अन्तःपुरगतां कन्यां देवीगुप्तां यियासति । मन्त्रिणि न्यस्तराज्यस्तु सुखसंस्थापितः प्रभुः । युवा भूमिपतिः प्रायोनिभृतः काममाचरेत् । कन्यामिह परिणयविषयां देवीगुप्तां महिषीं ज्ञानविरहेण ॥"—इति

न प्रयोगतो दृष्टा, तत्तस्यैव राज्ञः सर्वजनहृदयाह्लादिनो बहुमानादस्मासु चानुग्रहबुद्ध्या वा यथावत् प्रयोगेण त्वया नाटयितव्येति। तद्यावन्नेपथ्यरचनां कृत्वा यथाभिलषितं सम्पादयामि।

[ परितोऽवलोक्य ]

आवर्जितानि(५)सामाजिकानां मनांसि इति मे निश्चयः कृतः।

श्रीहर्षो निपुणः कविः परिषदप्येषा गुणग्राहिणी
लोके हारि (६) च वत्सराजचरितं, नाट्ये च दक्षा वयम्।
वस्त्वेकैकमपीह वाञ्छितफलप्राप्तेः पदं किं पुन-
र्मद्भाग्योपचयादयं समुदितः सर्वो गुणानां गणः (७) ॥३॥

[ नेपथ्याभिमुखमवलोक्य (८) ]

आर्ये! कथं प्रस्तावनाभ्युद्यते मयि? विदितास्माभिः प्रयागाधिपतेर्दृढवर्म्मणः कञ्चुकिनो भूमिकां कृत्वास्मज्ज्ञाता

---

नाटिकालक्षणम्। कैशिकादिवृत्तयस्तिस्रः। तत्र कैशिकीवृत्तलक्षणन्तु—"या श्लक्ष्णा नेपथ्यविशेषचित्रा स्त्रीसङ्कुला प्रोज्ज्वलनृत्यगीता। कामोपभोग-प्रचुरोपचारा सा कैशिकी चारुविलासयुक्ता।"

(५)—आहृतानि, आकर्षितानित्यर्थः।

(६)—मनोहारीत्यर्थः।

(७)—अयं गुणानां गणः समूहः सर्व एव मद्भाग्योदयात् समुदितः एकत्रीभूतः।

(८)—'नेपथ्यं नाट्यशालायां नेपथ्यं च विभूषणे' इत्युक्तेर्नेपथ्यं नाट्यशाला जवनिकान्तर्भूमिरिति यावत्, तस्या अभिमुखं सन्मुखम्।

इतएवाभिवर्तते (९) । तद्यावदहमपि अन्तरभूमिकां (१०) सम्पादयामीति निष्क्रान्तः ।

॥ प्रस्तावना ( ११ ) ॥

—:-:—

ततः प्रविशति कञ्चुकी (१२) ।

[सशोक-भयं नाटयन्, निःश्वस्य] कष्टं भोः कष्टं !! ॥

राज्ञोविपद्बन्धुवियोगदुःखं
देशच्युतिर्दुर्गममार्गखेदः ।
आस्वाद्यतेऽस्याः कटुनिष्फलायाः
फलं मयैतच्चिरजिवीतायाः ॥ ४ ॥

[सशोकं सविस्मयञ्च] तादृशस्यापि नामाप्रतिहतशक्ति-त्रयस्य रघु-दिलीप-नहुष-तुल्यस्य दृढ़वर्म्मणोमत्प्रार्थनेऽप्यनेन स्वदुहिता वत्सराजाय दत्तेति बन्धानुशयेन वत्सराजो बन्धनान्न निवर्तते इति लब्धरन्ध्रेण सहसाऽऽगत्य कलिङ्गहतकेन विपत्तिरीदृशी क्रियत इति यत् सत्यमुपपन्नमपि न श्रद्दधे ।

---

(९)—आगच्छति ।

(१०)—तदर्थभूमिकां । अभिनेयपात्रादिवेशान्तरग्रहणञ्च भूमिका ।

(११)—राज्ञामन्तःपुराधिकारिद्वारपालः ।

(१२)—नेपथ्य इत्यारभ्य निष्क्रान्त इति यावत् ग्रन्थस्य प्रस्तावनेति सञ्ज्ञा । "नटी विदूषकोवापि पारिपार्श्वक एव वा । सूत्रधारेण सहिताः संलापं यत्र कुर्वते । आमुखं नाम तस्यैव सा तु प्रस्तावना मता ।"

कथमेकान्तनिष्ठुरमीदृशं च दैवमस्मासु ? येन सापि राजपुत्री यथाकथञ्चिदेनं वत्सराजमुपनीय स्वामिनं अनृणं करिष्यामीति मत्वा मया तादृशादपि प्रलयकालदारुणावस्कन्दसम्भ्रमादपवाह्य देवस्य दृढवर्म्मणो मितृभावान्वितयैवाटविकस्य नृपतेर्विन्ध्यकेतोर्गृहे स्थापिता सती, स्नानाय नातिदूरमित्यगस्त्यतीर्थङ्गते मयि चण्डकैरपि, निपत्य हते विन्ध्यकेतौ रक्षोभिरिव निर्मानुषीकृते दग्धेस्थाने, न ज्ञायते कस्यामवस्थायां वर्त्तत इति? निपुणञ्च विचितमेतन्मया सर्व्वं स्थानं, न च ज्ञातं किन्तैरेव दस्युभिर्नीता ? अथवा दग्धेति ? तत् किं करोमि मन्दभाग्यः [विचिन्त्य] अये ! श्रुतं मया बन्धनात् परिभ्रष्टः प्रद्योततनयामपहृत्य वत्सराजः कौशाम्बीमागत इति । किं तत्रैव गच्छामि ?

[ निःश्वस्यात्मनोऽवस्थां पश्यन् ] किमिव हि राजपुत्र्या विना तत्र गत्वा कथयिष्यामि ? अये ! कथितं वा अद्य मम विन्ध्यकेतुना—"माभैषीः जीवति तत्र भवान् महाराजो दृढवर्म्मा गाढप्रहारजर्ज्जरीकृतोवपुस्तिष्ठति इति। तदधुना स्वामिजनमेव गत्वा पादपरिचर्य्यया जीवित-शेषमात्मनः सफलयिष्यामि [ परिक्रम्योर्ध्वमवलोक्य ] अहो ! अतिदारुणता शरदातपस्य, यदेवमनेकदुःखसन्तापितेनापि मया तैक्ष्णीमवगम्यते—

धनुबन्धनमुक्तोयं कन्याग्रहणात् परान्तुलां प्राप्य ।
रविरधिकस्वधामा प्रतपति खलु वत्सराज इव ॥ ५ ॥

निष्क्रान्तः ॥

॥ इति विष्कम्भकः (१३)॥

---

॥ ततः प्रविशति राजा विदूषकश्च ॥

राजा । भृत्यानामविकारिता परिगता, दृष्टा मतिर्मन्त्रिणाम्,
मित्राण्युपलक्षितानि, विदितः पौरानुरागोऽधिकम् ।
निर्व्यूढ़ा रणसाहसव्यसनिता स्त्रीरत्नमासादितम्,
निर्व्याजादिव धर्मतः किमिव न प्राप्तं मया बन्धनात्(१४)॥६॥

विदू० । [ सरोषं ] भो वअस्स! कहन्तं एव्व दाणीए उत्तं बन्धणहदअं पसंसेसि तं दाणिं विसुमरेहि जं तहं पासगग्गहोवि अवई । खलखलाअमाण लोहसिंखला वन्धपड़ि क्खलन्त चलणोसुसद्दुखर पिसुणिज्जत हिअअ संदावो रोसवसुत्तम्भिद । दिठ्ठि गरुअकरफोडि अधर णिअग्गोर अणीसुविअणिद्दा सुहं अणुवादेसि ?

---

(१३)—"वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः । संक्षेपार्थस्तु विष्कम्भो मध्यपात्र-प्रयोजितः ॥"—इति लक्षणम् ॥

(१४)—निर्व्याजात् छलं त्यक्त्वा, धर्मतः कथ्यमानेऽवश्यं वक्तव्यमेतद्—यत्, मया बन्धनात् बन्धनं प्राप्य किमिव न प्राप्तम्? अपितु सर्व्वमेव प्राप्तमिति भावः । तथाहि— भृत्यानाम् अविकारिता प्रभुनिष्ठता परिगता, मन्त्रिणाम् मतिः प्रज्ञा दृष्टा बुद्धा, मित्राणि अपि उपलक्षितानि कार्य्यतः परिचितानि; अधिकन्तु विशेषतस्त पौराणाम् अनुराग' विदितः; रणविषयकसाहससम्बन्धिनी व्यसनिता निर्व्यूढ़ा त्यक्ता (तत्र दीपहष्टिस्फुर्तिरपि फलमिकाम्); स्त्रीरत्नम् अस्या नाटिकाया नायिकाम् प्रद्योत-पुत्रीम् आसादितं लब्धम् ।

राजा। वसन्त! दुर्जनः खल्वसि। पश्य—

दृष्टं छादकमन्धकारगहनं नो तन्मुखेन्दुद्युतिः
पीड़ा ते निगलस्वनेन मधुरास्तस्या गिरो न श्रुताः।
क्रूरा बन्धनरक्षणोद्यमनसः स्निग्धाः कटाक्षा न ते
दोषान् पश्यसि बन्धनस्य न पुनः प्रद्योतपुत्र्या गुणान्(१५)॥७

विदू०। [सगर्वं] भो अपि दावबन्धणं सुहबन्धणं होइ ता किस तुमन्दिढ़वम्मोबन्धोत्ति कलिंगलसो उवरि रोसं बन्धेसि?

राजा। [विहस्य] धिङ्मुर्ख! न खलु सर्व्वो वत्सराजः यएवं वासवदत्तामवाप्य बन्धनान्निर्यास्यति। तदास्तां तावदियं कथा। विन्ध्यकेतोरुपरि बहून्यहानि विजयसेनस्य प्रेषितस्य (१६)। न चाद्यापि तत्सकाशात् कश्चिदागतः। तदाहूयतां तावदमात्यो रुमखान्, तेन सह किञ्चिदालपितुमिच्छामि।

॥ प्रविश्य प्रतिहारी (१७)॥

जेदु जेदु देवो एसोक्खु विजअसेणो अमच्चो रुमखोवि पड़िहार भूमिं उवठ्ठिओ।

---

(१५)—कथं दुर्जन इत्याह—दृष्टमित्यादि। यतः त्वं बन्धनस्य दोषान् पश्यसि, न पुनः प्रद्योतपुत्र्याः गुणान् पश्यसि अत इति भावः।

(१६)—संवादो नावगत इति शेषः।

(१७)—प्रतिहारो द्वारः, प्रतिहारी द्वारपालः।

राजा। त्वरितं प्रवेशय।

प्रति। जं देवो आणवेदि। इति निष्क्रान्तः।

॥ ततः प्रविशति रुमखान् विजयसेनश्च॥

रुमखान्। [विचिन्त्य]

तत्क्षणमपि निष्क्रान्ताः कृतदोषा इव विनापि दोषेण।
प्रविशन्ति शङ्कमाना राजकुलं प्रायशो भृत्याः (१८) ॥ ८॥

[उपसृत्य] जयतु देवः।

राजा। [आसनं निर्दिश्य] रुमखन्! इत आस्यताम्!

रुम। [सस्मितम् उपविश्य] एष खलु जित-विन्ध्यकेतुर्विजयसेनः प्रणमति।

विज [तथाकरोति]

राजा [सादरं परिष्वज्य] अपि कुशली भवान्?

विज। अद्य स्वामिनः प्रसादात्।

राजा। विजयसेन! स्थीयताम्।

विज [उपविशति]

राजा। विजयसेन! कथय विन्ध्यकेतोर्वृत्तान्तम्?

विज। देव! किमपरं कथयामि—यादृशः स्वामिनि कुपिते?

राजा। तथापि विस्तरतः श्रोतुमिच्छामि।

---

(१८)—भृत्याः राजकुलात् तत्क्षणमपि निष्क्रान्ताः, पुनः प्रवेशकाले विनापि दोषेण दोषमकृत्वापि कृतदोषाः कृतापराधाः इव शङ्कमानाः सन्तः राजकुलं प्रविशन्ति। एवं राजकुलभयं प्रायश एव लक्ष्यन्ते।

विज। देव! श्रूयताम्—इतो वयं देवपादादेशाद् यथादिष्टेन करितुरगपदातिसैन्येन महान्तमप्यध्वानं दिवसत्रयेणो-ल्लङ्घ्य प्रभातवेलायामतर्किता एव विन्ध्यकेतोरुपरि निपतिताः स्मः!

राजा। ततस्ततः?

विज। ततस्सोप्यस्मद्बलमतुलकलकलाकर्णनेन प्रतिबुद्ध-केशरीव विन्ध्यकन्धरान्निर्गत्य विन्ध्यकेतुरनवेक्षितबल-वाहनोयथासन्निहितकतिपयसहायः सहसा खमुद्घोष-यन् अस्मानभिरोद्धुम् प्रवृत्तः।

राजा [ रुमखन्तमवलोक्य, सस्मितं] शोभितं विन्ध्यकेतुना। ततस्ततः?

विज। ततोऽस्माभिरयमसाविति द्विगुणबद्धमत्सरोत्साहै-र्महता विमर्देन निःशेषितसहायः एकएव विमर्दिता-धिकबलक्रोधवेगोदारुणतरं संप्रहारमकरोत्।

राजा। साधु विन्ध्यकेतो! साधु साधु!!

विज। किं वावर्ण्यते देव! संक्षेपतो विज्ञापयामि—

पादान्तं पत्तिरेव प्रथमतरसुरःक्षेपमात्रेपि विद्धा
दूरान्नीत्वा शरोघैर्हरिणकुलमिव त्रस्तमश्वीयमाशाः।
सर्वत्रोत्सृष्टसर्व्वप्रहरणनिवहस्तूर्णमुत्थाय खड्गं
पश्चात्कर्तुं प्रवृत्तः करिकरकदलीकाननच्छेदलीलाम्(१९)॥९

---

(१९)—पश्चात्तूर्णं झटिति खड्गम् उत्थाय, करिकरा एव कदलीकाननानि तेषां छेदलीलां कर्त्तुं प्रवृत्तः इत्यर्थः।

एवं बलत्रितयमाकुलमेक एव
कुर्वन् कृपाणच्छुरिताङ्गकूटः ।
शस्त्रप्रहारशतझर्झरितोरुवक्षाः
श्रान्तश्चिराद्विनिहितो युधि विन्ध्यकेतुः(२०)॥१०॥

राजा । रुमण्वन् ! पुरुषोचितमार्गमनुगच्छतो यत् स्वर्गं व्रीडिता इव वयं विन्ध्यकेतोर्मरणेन ।

रुम । देव ! त्वद्विधानामेव गुणैकपक्षपातिनां रिपोरपि गुणाः प्रीतिं जनयन्ति ।

राजा । अप्यस्ति विन्ध्यकेतोरपत्यं यस्य परितोषस्य फलं दर्शयामि ?

विज । देव ! इदमपि विज्ञापयामि—एवं सबन्धुपरिवारे हते विन्ध्यकेतौ तमनुसृतासु सहधर्मचारिणीषु विन्ध्यशिखराश्रितेषु जनपदेषु शून्यभूते स्थाने—हा तात ! हा तातेति कृतकृपणप्रलापा विन्ध्यकेतोर्वंशन्यभिजातरूपा कन्यका तद्दुहितेत्यस्माभिरानीता—द्वारि तिष्ठति । तां प्रति देवः प्रमाणम् ॥

---

(२०)—एवम्प्रकारेण एव बलत्रितयं पूर्व्ववर्णितं पत्त्यश्वगजात्मकम् अस्मदीयम् आकुलं कुर्वन्, श्रान्तः, कृपाणैः अस्मदीयैः छुरिता छिन्ना अंगकूटाः यस्य तथाविधः किञ्च शस्त्रप्रहारशतझर्झरितोरुवक्षाः सन् चिरात् अतिविलम्बेन विन्ध्यकेतुः युधि विनिहितः निधनं प्राप्तः मृत इत्यर्थः ।

राजा। यशोधरे! गच्छ त्वमेव वासवदत्तायाः(२१) समर्पय। वक्तव्या च देवी देविभगिनी बुध्या त्वयैव सर्वदा द्रष्टव्या, गीतनृत्यवाद्यादिषु विशिष्टकन्यकोचितसर्व्वं(२२) शिक्षयितव्या ; यदा वरयोग्या भविष्यति तदा मां स्मारयेति।

प्रति। जं देवो आणवेदि। ॥ इति निष्क्रान्तः॥

नेपथ्ये (२३) [ वैतालिकः (२४) ]

लीलामज्जनमङ्गलोपकरणस्नानीयसम्पादनः
सर्व्वान्तःपुरवारविभ्रमवती लोकस्य ते सम्प्रति।
आयासः स्खलदंशुकव्यवहितच्छायावदातैस्तनै-
रुत्क्षिप्ता परशातकुम्भकलशैवालङ्कृता स्नानभूः(२५)॥११

राजा [ऊर्द्ध्वमवलोक्य] अये! कथं नभोमध्यमध्यास्ते भगवान सहस्रदीधितिः? सम्प्रति हि—

आभात्यर्कांशुतापक्वथदिवसफेरोद्वर्तनैर्दीर्घिकाम्भः
छत्राभं नृत्तशाला शिथिलमपि शिखी बर्हभारं तनोति।

---

(२१)—वासवदत्तायाः समीपं तां समर्पयेति यावत्॥

(२२)—विशिष्टकन्यका भद्रपरिवारः।

(२३)—अभिनयार्थसज्जाभूमौ।

(२४)— स्तुतिपाठकः भाटादिः।

(२५)—स्नानभूः स्नानार्थनिर्दिष्टा भूमिः, परा उत्कृष्टाः शातकुम्भकलशाः सुवर्णघटाः यत्र तादृशी सती अलङ्कृता इव। ते, सम्प्रति—इति पदद्वयं सर्वत्र सम्बन्धनीयम्।

छायाचक्रं तरूणां हरिणशिशुरुपैत्यालवालाम्बुलुब्धः
सद्यस्त्यक्त्वा कपोलं विशति मधुकरः कर्णपालीं गजस्य(२६)॥१२॥

भगवन्! तिष्ठ तिष्ठ; प्रविश्याभ्यन्तरमेव कृतयथोचित-क्रियाः सत्कृत्य विजयसेनं कलिङ्गोच्छित्तये प्रेषयामः॥

॥ इति निष्क्रान्ताः सर्व्वे ॥

## ॥ इति प्रथमोऽङ्कः ॥

—:०:—

---

(२६)—मधुकरः गजस्य मदमत्तवारणस्य कपोलप्रदेशं सद्यः त्यक्त्वा तस्यैव कर्ण-पालीं कर्णपालकं रन्ध्रीपरिस्थ-चर्म्मप्रदेशं विशति तदभ्यन्तरं गच्छति कपोले रौद्रस्य प्राचण्ड्य मनुभूय कर्णरन्ध्रं प्रविशतीति भावः।

# द्वितीयाङ्कः

—:०:—

॥ ततः प्रविशति विदूषकः (२७) ॥

णं भणिदोह्मि इन्दीवरि आए जह अज्ज उववासणिअ मट्ठिआ देवी वासवदत्ता सोत्थि वाअणनिमित्तस्स दा वेदित्ति ताजाव धाराधरुज्जाणट्ठिदा आए वाहुअदेवी पासंग दुअ कुक्कुटवादं कसिस्सं अखहा कहं अह्माणं सरिसा बह्मणाराअउलेपड़िग्गहं करेदि [ नेपथ्याभिमुखमवलोक्य ] कहं एसो पियवअस्सो अज्ज देवीए विरहक्कण्ठविणोदणाणिमित्तं धाराधरुज्जाण एव्व पत्थिदो ता जाव वअस्सेण सह एव्व गदुअजहोदिढं अणुचिट्ठिस्सं ॥

॥ ततः प्रविशति सोत्कण्ठो राजा ॥

स्नातां मङ्गलमात्रमण्डनभृतं मन्दोच्चतोलापिनीं
मां पाण्डुच्छविना मुखेन जनिते प्रातस्तनेन्दुद्युतिम् ।
सोत्कण्ठां नियमोपवासविधिना चेतोममोत्कण्ठते
तां दृष्टुं प्रचयानुरागजनितां वत्सामिव स्वप्रियाम् ॥१॥

विदू० [ उपसृत्य ] सोत्थि ह्मो देव एदु भवं ।

---

(२७)—आदिरसपहायविशेषः, हास्यरसोद्दीपकः । परनिन्दकश्च ।

राजा [ विलोक्य ] वसन्तक ! कस्मात् प्रहृष्ट इव लक्ष्यसे ?

विदू०। अक्ख अंखु बह्माण ।

राजा। यद्येवं—ततः किम् ?

विदू० [सगर्वं] भो ईरिस्सो क्खु, बह्मणो जो चउव्वेद पञ्च वेद छठ्ठ वेद सहस्स बह्मण पञ्चाउले रायउले पुड़मं एव देवी स आसादो सोत्थि वाअणं लहेमि।

राजा [विहस्य] वेदसङ्ख्यैवावेदितं ब्राह्मण्य ? तदागच्छ महाब्राह्मण ! धाराधरोद्यानमेव गच्छामः।

विदू०। जं देवो आणवेदि राआ गच्छह्म। [परिक्रम्यावलोक्य च ] भो वअस्स! पेक्ख पेक्ख—अविरद पडंत विविह कुसुम सुयुमाल सिलाअलुच्छगस्स परिमलणिलीण महुअर भरभग्ग वउल मालवीलदा जालअस्स कमल गन्धवहणुद्दामसमारुदपड़िविबुद्धं वधूअवन्धणस्स अविदलतमालतरुपिहिदालपप्प आवरस्स। अस्स धाराधरुज्जाणअस्स सस्सि अरीअअं।

राजा। वयस्य! साध्वभिहितम्। अत्र हि—

(१)वृन्तैः क्षुद्रप्रवालस्थगितमिव तलं भाति सेफालिकानां गन्धः सप्तच्छदानां सपदि गजमदामोदमोहं करोति।

(१)—सेफालिकानां वृन्तैः तलं भूमितलं क्षुद्रप्रवालस्थगितमिव भाति। सप्तच्छदाना गन्धः संपदि हठात् गजमदामोदस्य मोहं करोति जनयति। एते च मधुलिहः अवाचः स्फुटवाक्शक्तिशून्या अपि किमपि गायन्ति। एते कीदृशाः ? इत्याह—उन्निद्राणां मुकुलितानां पद्मानां च्युतानि यानि बहुलपरिमितानि रजांसि रेणवः, तैः कायाः पिङ्गाङ्गरागाश्च, तत्र रात्रिवासात् पुनः कीदृशाः? वारुणीपानमत्ताः।

एते चोन्निद्रपद्मच्युतबहलरजःकाणपिङ्गाङ्गरागा
गायन्त्यप्यवाचः किमपि मधुलिहो वारुणीपानमत्ताः॥२॥

विदू०। भो वयस्स! एदंवि दाव पेक्खपेक्ख, जो एसो अवि अपंडत कुसुमणिअरो अज्ज पिपन्ततर गच्छन्त वरिसावसाण सलिलबिन्दु विअलक्खोअदि सन्त वसपाअवो।

राजा। वयस्य! सम्यगुत्प्रेक्षितं—बद्धेव सदृशं जलदसमयस्य। तथाहि—

विभ्राणा मृदुतां शिरीषकुसुमश्रीहारिभिः शाद्वलैः
सद्यः कल्पितकुट्टिमामरकतच्छोदैरिवचालितैः
एषा सम्प्रति बन्धनाद्विगलितैर्बन्धूकपुष्पोत्करै-
रद्यापि चितिरिन्द्रगोपक(२)शतैश्छन्नेव संलक्ष्यते॥३॥

॥ ततः प्रविशति चेटी (३) ॥

आणत्तह्मि देवीए वासवदत्ताए हञ्जे इन्दीवरीए अज्ज मए अगहिय महेसिणी अहो दातव्वोता गच्छतुमं सेहालिआ-कुसुममालं लहुगिह्निअआ अच्छेत्ति एसावि आरणिआ धारारुज्जाणदीहिआए जावऐवि असिआई कमआई णअत्था हिलासिणा सुञ्जणमण्डलाबिज्जन्ति ताव एव्व लहुअं अवणुचिअआ अच्छ दुत्ति एसा ते वसिणी तदोहि अस

---

(२)—इन्द्रगोपको—वर्षाकालभवीरक्तवर्णकीटविशेषः।

(३)—क्रीता दासी।

जाणादि तागच्छि अन्तं गमिस्सं [ नेपथ्याभिमुखमवलोक्य ]
इदो इदो आरणिए ! एहि।

॥ ततः प्रविशत्यारण्यिका ॥

( सवाष्पोद्वेगमात्मगतं ) तह णाम नारिसे बंशे उप्पणाए अण्णं जस्स अब्भाविअठ्ठिदाए सम्मदं परस्समए आणत्ती कादव्बत्ति णखिक्खु दुक्खरं देवस्स अहवा महएव्वा एसोदासो जेण जाणन्तीए विणवावादिओ अप्पाता किं सम्मदं करिस्सं? अहवा दुःक्खरे दाणिं मए चिन्तिदं परं एव्व एदं पिणउण अणो महत्थं वस्सं पआस अन्तीए मएलहु किदो अप्पाकागई जहभणिदं अणुचित्तिस्सं।

चेटी। इदो एहि आरणिए!।

आर। इअ आअच्छामि। [श्रमं नाटयति] हञ्जे! दूरे किं अज्ज वि दीत्थिआ ?

चेटी। एसा सेहालिआ गुम्मन्तरिआ ता एहि ओदरह्म।

[अवतरणं नाटयतः]

राजा। वयस्य! किमन्यदिव चिन्तयसि ? ननु ब्रवीमि "बह्वेव सहश्रं जलदसमयस्येति" [भ्राणीत्यादि पठति]

विदू०। [सक्रोधम्] भोतु मन्दाव एदं असच्च पेक्खन्तो उक्कण्ठा णिब्भरं विणोदेसि अप्पाणं मम उण बह्मणस्स सोत्थिवा अणवेला अदि कमदि ताजाव अहन्तु वरि अन्दी हि आएच्छाइअ देवीए स आसं गमिस्सं।

राजा। ननु मूर्ख! पारङ्गता एव वयं दीर्घिकायाः; एवम् अनेकेन्द्रियसुखातिशयमनुभवन्नपि नोपलभसि? पश्य—

(४)श्रोत्रं हंसस्वनोऽयं सुखयति दयिता नूपुराह्लादकारी,
दृष्टिं प्रीतिं विधत्ते तटतरुविवरालक्षिता सौधमाला।
गन्धेनाम्भोरुहाणां परिमलपटुना जायते घ्राणसौख्यम्,
गात्राणां ह्लादमेते विदधति मरुतो वारिसम्पर्कशीताः॥४॥

तदेहि—दीर्घिकातटमुपसर्पावः [परिक्रम्यावलोक्य च] वयस्य! पश्य पश्य—

(५)उद्यानदेवतायाः स्फुटपङ्कजकान्तिहारिणी।
स्वच्छा दृष्टिरिव दीर्घिकेयं रमयति मां दर्शनेनैव॥५॥

विदू०। [सकौतुकं] भो वअस्स! पेक्ख पेक्ख का एसा कुसुमपरिमलसुअन्धवेणी मञ्जअरावली विह मल-

(४)—हंसस्य अयं स्वनोरावः श्रोत्रं सुखयति-सुखं करोति; नूपुररवेण आह्लादं कर्तुं शीला = नूपुराह्लादकारी इयं दयिता; दीर्घिकायास्तटे स्थितानां तरूणां विवरे आ = समन्तात् लक्षिता = तटतरुविवरा—एवम्भूता सौधानां नैधानां माला, दृष्टिं दर्शनेन्द्रियं प्रीतिं विधत्ते ददाति; अम्भोरुहाणां कमलानां परिमलं = धरितः सम्बन्धं कर्तुं पटुः समर्थस्तेन परिमलपटुना गन्धेन घ्राणस्य ज्ञाणग्राहकेन्द्रियस्य सौख्यं जायते, किञ्च वारिणा सम्पर्केण शीताः शीतजनकास्तथाएते मरुतः गात्राणां ह्लादं विदधति॥

(५)—स्फुटानि = प्रस्फुटितानि पङ्कजानि तेषां कान्तिं = शोभां दीप्तिं वा हर्तुं शीला या = सा तया, उद्यानदेवतायाः तदधिष्ठात्र्याः स्वच्छा दृष्टिरिव इयं दीर्घिका दर्शनेनेव मां रमयति क्रीडयतीत्यर्थः॥

आरुणहत्थपल्लवा उब्भुलंततणुकोमलबाहुलदा सच्च पच्चक्खचरी विअ उज्जाणदेवदा ईत्थि आदीसई।

राजा। [सकौतुकं विलोक्य] वयस्य! निरतिशयस्वरूप-(६)शोभाजनितबहुविकल्पेयं तत्सत्यं नाऽवगच्छामि, पश्य —पातालाद्भुवनावलोकनपरा किं नागकन्योत्थिता मिथ्या तत् खलु दृष्टमेव हि मया तस्मिन् कुतोऽस्तीदृशी मूर्त्तौ स्यादिह कौमुदी न घटते तस्या दिवादर्शनम् केयं हस्ततलस्थितेन कमलेनालोक्यते श्रीरिव ॥ ६ ॥

विदू०। [निरूप्य] एसा देवीए परिचारिआ इन्दीवरिआ ता गुम्मंतरिआ भविअ पेक्खह्म॥

उभौ [तथा कुरुतः]

चेटी। [कमलिनीपत्रग्रहणं नाटयन्ती] आरक्खिए अवचिणु सुमं पदुमाइं। अहं वि एदसिं मालिणीपत्तं भिसेहालिआ कुसुमाइं अवचिणुअ देवी सआसं गमिस्सं॥

राजा। वयस्य! सल्लाप इव वर्तते, तदवहितौ: शृणुमः। कदाचिदितएव व्यक्तीभविष्यति।

---

(६) — हस्ततलस्थितेन कमलेन श्रीः लक्ष्मीरिव आलोक्यते, इयं का? किं पातालात् नागकन्या उत्थिता? कुतः सा सम्भाव्यते चेदाह—भुवनावलोकनपरा। इदानीं प्रतिषेधति—तत् उक्तमेतत् सम्भावनं खलु निश्चयं मया दृष्टमेव मिथ्या, तदीय मिथ्यात्वं प्रत्यक्षमिव पश्याम्येवेति भावः; हि यतः तस्मिन् पाताले ईदृशी युवति.. कुतोऽस्ति? नास्त्येवेत्यभिप्रायः। ननु कौमुदी ज्योत्स्ना मूर्त्तौ स्यात् नेत्याह— तस्याः मूर्त्तेः इह दिवा दर्शनं न घटते॥

चेटी। [ गमनं नाटयति ]

आर। हला इन्दीवरिए ण सक्कुणोमि तुए विणा एद्ध आसिदुं।

चेटी। (विहस्य) जादिस' अज्ज मए देवीए मन्तिदं सुदं तारि सच्चिरएव्व मए विलातए आसिदव्व।

आर। [सविषादं] किं देविए मन्तिदं ?।

चेटी। एदं तदाए सा अहं महाराएसं भणिदा जहदाए सा विध्यकेदु दुहिआ वरजोग्गाभविस्सदि तदा अहं सुमराव इदव्वोत्ति ता सम्पदं महाराअ सुमरावेमि जेणसे वरचिन्ताए आउलो भविस्सदि।

राजा [ सहर्षं ] इयं सा विन्ध्यकेतोर्दुहिता सानुतापं चिरमुषितास्मो वयम् वयस्य! निर्दोषदर्शना कन्या विस्रब्धमिदानीं पश्यामः।

आर०[सरोषं,कर्णौ पिधाय] ता गच्छ तुमं णतुए असम्बन्ध पलाविणो एपओअणं।

चेटी [ अपसृत्य, पुष्पापचयं नाटयति ]

राजा। अहो! सुतरां प्रकटीकृतं माभिजात्यन्धीरितया। वयस्य! धन्यः खल्वसौ—य एतदङ्गस्पर्शसुखभाजनं भविष्यति।

आर० [ कमलापचयं नाटयति ]

विदू०। भो वयस्स! पेक्ख पेक्ख एसा सलिलचलन्त कर-पल्लवपहाविन्धदेणओहसि असोहं करेदि कमलवणं अवचिणन्ति

राजा। वयस्य! सत्यमेवैतत् पश्य—

(७) अच्छिन्नामृतविन्दुवृष्टिसदृशीं प्रीतिं ददत्या दृशां
याताया विगलत्पयोधरपटाद्द्रष्टव्यतां कामपि।
अस्याश्चन्द्रमसस्तनोरिव करस्पर्शास्पदत्वङ्गता
नैते यन्मुकुलीभवन्ति सहसा पद्मास्तदेवाद्भुतम्!! ॥७॥

आर० [भ्रमरबाधं नाटयति] हद्धि एदेक्ख् अवरे परिचइअ कमलिणीं णिलुपलवणाइं समापड़न्ता आआसअन्ति मन्दःठ्ठ महुअरा उत्तरीयेण मुखं पिदधाति [सभयम्] हला इन्दीवरिए! परित्ताहि मं परित्ताहि मं एदे दुठ्ठ महुअरा परि भविस्सन्ति॥

विदू०। भो वअस्स! पुस्सादेमणोरहा जाव एव्व गब्भदासीए सुदाए आ अच्छइ दाएव्व तुमं वितुण्हीकोवरविअउवसप्प एसावि सलिलसदसुणिदेण पअसञ्चारेण इन्दीवरिआ अच्छदिति जाणिअ तुमं एव्व ओलक्खस्सदि।

राजा। साधु साधु—वयस्य! कालानुरूपमुपदिष्टम्।

[इत्यारण्यका समीपमुपसर्पयति]

---

(७)—विगलतो विच्छिन्नतः पयोधररूपपटात् कामपि—अनिर्वचनीयां द्रष्टव्यतां यातायाः चन्द्रमसस्तनोरिव अच्छिन्नामृतविन्दुवृष्टिसदृशीं प्रीतिं ददत्या अस्याः नायिकायाः कर-स्पर्शास्पदत्वं प्राप्ताः ये एते पद्मा स्ते सहसा हठात् न मुकुलीभवन्ति—तदेव अद्भुतम्! उपमाने करशब्दः किरणपरस्तथाच चन्द्रमसः किरणपातेन पद्मानां मुकुलीभवनं प्रसिद्धम्। उपमेये करशब्दो हस्तपरोऽपि हस्तपरपद्मेतु पद्मशब्दो मुखपरः—बहुवचनं सम्मानार्थं इति विशेषः॥

आर० [ पदभ्रव्दाकर्णनं नाटयन्ती ] इन्दीवरीए लहु उपसप्पस्थ उलोकिदह्मि दुठ्‌ठ महुअरेहिं [ राजानमवलम्बते ]

राजा [ कण्ठे गृह्णाति ]

आर [ उत्तरीयं मुखादपनीय राजानं अपश्यन्ती भ्रमरावलोकनं नाटयति ]

राजा [ स्वोत्तरीयेण भ्रमरान्निवारयन् ]

(८)अयि ! विसृज विषादं भीरु ! भृङ्गास्तवैते
परिमलरसलुब्धा वक्त्रपद्मे वसन्ति।
विकिरसि यदि भूयस्त्रासलोलायताची
कुवलयवनलक्ष्मीं तत् कुतस्त्वां त्यजन्ति ? ॥

आर [ राजानं दृष्ट्वा साध्वसं नाटयन्ती ] कहं ण एसा इन्दीवरि आ [ सभयं राजानं त्यक्ता अपसरन्ती ] इन्दीवरि लहुआ अच्छ परित्ताहिमं परित्ताहिमं।

विदू०। होदी सअलं पुडविपरिताण सपथेण वच्छराएण परित्ताअन्ती चेटीं इन्दीवरीअं अं कदासि।

राजा ( अयि विसृजेति पुनः पठति )

---

(८)—अयि भीरु ! विषादं विसृज—परित्यज, परिमलरसलुब्धा एते भृङ्गा तव वक्त्र-पद्मे वसन्ति, भूयः पुनरपि यदि त्रासेन लोलायते अचिणी यस्या स्तथाभूता सती विकिरसि—परित्यजसि, निवारयसि वा—तान् भृङ्गानिति शेषः ; परन्तु यतस्त्वं कुवलयवनलक्ष्मीस्वरूपा तत्—तस्मात् तत्स्वरूपां त्वां कुतः—कथं ते भृङ्गास्त्यजन्ति ? न कथमपीत्यर्थः ॥

आर (राजानमवलोक्य)

[सस्पृहं सलज्जञ्च आत्मगतम्] आ अङ्ग सो महाराओ जं सा अहं तादेण दिणाठाणिक्खु ता दस पक्ख- वादी (आकुलतां नाटयति)

चेटी। आ आसिआक्खु आरणिआ दुट्ठ महुअरे हिं ता जाव उवस पिसमस्सा सेमि आरणिए आहि एसा उवअ दह्मि।

विदू०। भो ओसर ओसर एसाक्खु इन्दीवरिआ आअदा ता एदं उत्तत पेक्खिअ देवीए णिवेदइस्सदि (अङ्गुल्या निदिश्य) ता इमं एव्व कदलीधरं पविसि असुहुतं चिट्ठह्म (उभौ तथाकुरुतः)

चेटी। (उपसृत्य कपोलौ स्पृशन्ती) हञ्जे आरणिए! कमलसरिससतुहव असस्स अ अन्दोसो जं महुअरा एव्वं अवरज्झती (हस्ते गृहीत्वा) ता एहि गच्छह्म परिणदो हि अहो—(गमनं नाटयतः)

आर० (कदलीगृहाभिमुखं विलोक्य) हञ्जे इन्दी वरिए! अदिसि सिरदाए सलिलं स उक्कय भो विअस सुं पुणो ता सणीयं गच्छह्म।

चेटी। तह (इति निष्क्रान्ते)

विदू०। एहि णिकह्मतं गहि अए सा दासीए सुदा इन्दी वरिआगदा (तथा कुरुतः)

राजा (निश्वस्य) कथं गता? सखे वसन्तक! न स्वल्पविघ्नमभि-

लषितमधन्यैः प्राप्यते ( विलोक्य ) सखे! पश्य पश्य—

(९)आबद्धमुखमपीदं कण्टकितं कमलकाननं तस्याः।
सुकुमारपाणिपल्लवसंस्पर्शसुखं कथयतीव ॥ ९ ॥

( निश्वस्य ) सखे ! क इदानीं उपायः पुनस्तां द्रष्टुम् ?

विदू। भो तुमं एव पुत्तलिअ भञ्जिअ दाणिं रोदिसि णमिमुस्स बह्मणस्स वअणं करेसि ?

राजा। किं मया न कृतं।

विदू०। तं दाणिं सुमरिदं जइतुह्मो को भविअ उवसम्पेति मए भणिदो अदि सङ्कटे जं भवं पविसि अअलि अपडिच्च दुक्खि अट्ठो अइ विसिजवि सादेन्ति एदेहिं अणेहिं च कदुवअणेहिं चिअ सम्पदं किं रोदिसि। पुणोवि उवाअं पुच्छसि ?

राजा। कथं समाश्वासनमपि निर्भत्सितमिति भणितं मूर्खेण ?

विदू०। जाणिदं एव्व कायत्थसुक्खोत्ति ता किं एदेणा अत्थम आहिलासीभअवं सहस्स सहस्सक्खो ता एहि अभन्तर एव्व पविस्सह्म।

राजा। ( विलोक्य ) अये ! परिणतप्रायो दिवसः। अहं सम्प्रति हि—

---

(९)—कण्टकितं—कण्टकाच्छन्नं, इदं कमलकाननं आबद्धमुखमपि, तस्याः सुकुमारपाणिरूपपल्लवसंस्पर्शजनितसुखं कथयति इव।

(१०)हृत्वा पद्मवनद्युतिं प्रियतमेवेयं दिनश्रीर्गता
रागोऽस्मिन्मम चेतसीव सवितुर्बिम्बेऽधिकं लक्ष्यते ।
चक्राह्वोहमिव स्थितः सहचरीं ध्यायन्नलिन्यास्तटे
सञ्जातास्सहसा ममेव भुवनस्याप्यन्धकारा दिशः ॥१०॥

॥ इति निष्क्रान्ताः सर्व्वे ॥

## ॥ इति द्वितीयोऽङ्कः ॥

---

(१०)—अस्मिन् समये दिन-श्रीः मम प्रियतमा इव पद्मवन-द्युतिं हृत्वा गता, सवितु बिम्बरूपे मम चेतसि रागो रक्तिमा अधिक—विपुलं लक्ष्यते, अहं चक्राह्वः इव नलिन्यास्तटे सहचरीं ध्यायन् स्थितः, चकोरी यथा स्वसहचरीं ध्यायन् अपर-पारे नलिन्यास्तटे तिष्ठति तथाहमपीति; किञ्च मम भुवनस्य—अन्तर्भुवनस्य सर्वाः दिशः सहसैव हठादेव अन्धकाराः सञ्जाताः ॥

# तृतीयाङ्कः ।

—:०:—

॥ ततः प्रविशति मनोरमा ॥

आणत्तेह्मि देवीए वासवदत्ताए । हञ्जे मणोरमे! जं तं सङ्गिच्चाअणीए । अअ उत्तस्स मम अउत्तत्तं णाउ ओवणि धन्तस्स णत्थि द्व्वसेसं अज्ज ! तुह्मेहिं कोमदीमहूसवेण चिदव्वत्ति हिअो क्खु आरखिआए पिअसहीए सुसहि अआ एव्वणच्चिन्द । अज्जउण वासवदत्ताभूमिआए ताए जइ तह करीअदो । तदो अत्तस्सं देवी कुप्पदि ता कहिं दाव । तं पेक्खिअ उवालम्भिस्सं [ विलोक्य ] एसा आरखिआ अप्पणा एव्व किंपि ? मन्तअन्ती दिट्ठिआतले कदलीवरअं ःविस्सदो । ता गुम्मन्तरिदा भविअ सुणिस्सं दावसे त्रसङ्ग जप्पि दाणिं ॥

॥ ततः प्रविशति आरण्यका ॥

[ आसनस्था कामावस्थां नाटयन्ती ]

आर । [निश्वस्य] हिअअदुल्लहजणं पत्थअन्ती तुमं कीसमं दुःखिदं करेसि ?

मनो। तं एदं सुसाहिअस्स तस्स कारणं किं उण एसा पत्थेदि अवहिदा दावस्सुणिस्सं ?

आर। [ सास्रं ] कहं तह णाम सोहग्गदंसणो भविअ महाराओ एवं सन्दावेदिमं अच्चरिअं अच्चरिअं [ निश्वस्य ] अहवा मह एव्व एसा अआ अह अदा उस्सेणा महाराअस्स दोसो।

मनो [सबाष्पं] कहं महाराओ एव्वसे पत्थ णिज्झोसाइ पिअं-सहि साइ प्रियसहि अभिवाअसरिसोदे अहिलासो।

आर। कस्स दाव एदं उन्तं णिवेदिअ सम्म वेअणं विअ दुक्खं कारइस्सं [ विचिन्त्य ] अहव अत्थि मे हिअअ णिव्विसेसा पिअसही मणोरमा। ता एवि एदं तज्जाएण पारेमि अहिदुं सव्वहामरणं वज्जिअ कुदो मे हिअअस्स अण्णाणि कुदो।

मनो। इदि हत्थि अदि भूमिं गदोवि तवस्सिणीए अणुराआ, ता किं दाणिं एत्थ करिस्सं।

आर [ साभिलाषं ] अअंसुवि उद्देसो जसिस्समहुअरेहिं आआसिज्जन्ती। ओलक्खिअ महाराएण समस्सासिन दद्धि। माओरु मा आहिन्ति।

मनो [ सहर्षं ] कहं एसा विदिट्ठा महाराएण सव्वहा अत्थि से जीविदस्स उवाओ ? जावउवसपिपआ संसस्सा विलिणं [ सकम्पोपकुत्य] अज्ज उण जुत्तं णाम सही अआस्स दिअज्जिदुं।

आर। सलज्ज (मात्मगतं) हद्धि हद्धि सव्वं सुदं एदाएता एत्थ जुत्तं एव्व पआसइदुं। [प्रकाशं-हस्ते गृहीत्वा।] विस्सद्धी मा कुप्प मा कुप्प, लज्जा एव्व अवरधइ।

मनो [ सहर्षं ] सहि अलं सङ्काएँ एदं मे आचक्ख सच्च एव्व तुमं महाराएण दिट्‌ठासवेत्ति।

आर। अम्मं सही मणो पक्खवादेण मन्तेदिअइ सहि पक्खवादिणी देवी गुणणिम्मलणिवधे क्खु, तस्सि जणे कुदो एदं ?

मनो [ विहस्य ] हला अपंडिदे कमलिनी बद्धाणुराओ विसङ्कुअ रोमालदिं पेक्खिअ अहिणवरसा सादलं पओ कुदो तं आणासादि षट्‌ठिदिं करेदि ?

आर। किं एदिणा असम्भाविदेण ता एहि अहिअक्खु सरदादवेण सन्तप्पाइं अङ्गाइं अङ्गाइं सन्दावं मुञ्चन्दि।

मनो। अइ लज्जालु! एण जुत्तें एदावथं गदाएविदे अप्पा च्छादिदुं।

आर [ मुखमवनमति ]

मनो। अइ अविरसअमोले! किं दाणिं पच्छादेसिणी सासणिहविणिग्गओदि अहरत्तिंवि तुज्झ अणुराओ अचिरदयदन्तकुसुमसरसरणिवहउप्पण्णहुङ्कारसद्दोवि-अणभणइ।

आर। अहवणङ्कुअ अंकालोउवालअसजाजावणलिणपत्ताइं

सेहि अएदाइस्सं । [ उत्थाय, दीर्घिका-नलिनी-पत्राणि गृहीत्वा आरण्यका हृदये ददतो (समप्पसु) सही समस्ससु सही ।

॥ ततः प्रविशति विदूषकः ॥

अदि महतो क्खु पिअवअस्सस्स आरणि आए उवरि अणुराओ जेण परित्तज्ज राअकज्जो ताए एव्व दंसणोवा अचिन्तत अन्तो अप्पाणं विणोदेदि [विचिन्त्य] ता कहिं दाणिं न पेक्खं अहवताहि दिघिआए अम्हेसामि (परिक्रामति)

मनो ( आकर्ण्य ) पदसद्दो विअ सुणीअदि ता कदलीगुम्म-न्तरिआ भविअ पेक्खह्म दाव को एसोत्ति ।

उभे [ तथाकृत्वा पश्यतः ]

आर । कहं सो एव्व महराअस्स पस्स परिवट्ठी बह्मणो ?

मनो । कहं वसन्त एव्व? [सहर्षमालगतं] अविणामतहहवं ।

विदू [ दिशोऽवलोक्य ] किं दाणिं आरस्सिआसं च एव्वे सि उत्ता ?

मनो (सस्मितं) स हि राअवअरुसो क्खु बह्मणो तुमं उद्देसि अमन्तेदि ता दाव अवहिदा सुणह्म ।

आर ( सस्पृहलज्जं शृणोति )

विदू (सोद्वेगं) जदा हावमए गुरुअमअणसन्दावणी सहचरी सहचरी पिअवणस्ससस्सअसत्थवअणेण देवीणं वास-वदत्ता पडुमावदीणं अण्णाणं त्रिदेवोणअन्तणाइं अम्हेसं तेण ण सा दिट्ठा तदा जहिं दिह्निआए

दिट्ठाइदं विदाव पेक्खिस्सन्तीआ अदोह्मि ता जाव इह चिणह्मि किं दाणिं करिस्सं।

मनो। सुन्दं पिअसहीए।

विदू (विचिन्त्य) अहवभणिदो एव्व अहं वअस्सेण जइतं अखिसन्तो सन्तोण पेक्खसि ता तदो वि दाव दिट्ठिआदो एक अलप्परिसदि उणिअसुहसीललाइं नलिनीपत्ताइ गह्णिअ आअच्छत्ति ता कहं एदाइं जाणि दव्वाइ।

मनो। अअम्म अवसरो (उपसृत्य, विदूषकं हस्ते गृहीत्वा) वसन्तअ! एहि अहं दे जाणावेमि।

विदू (सभयं) कस्स तुमं जाणावेसि किं देवीए णह्मए किविमन्तिदं।

मनो। वसन्तअ! अलं संकाए जारिसी आरखिआए किदे अत्तणो पिअवअस्सस्स अवत्था वर्णीअदी तदो दिज-णदरी भट्टिणोवि किदे मम पिअसहीए अवत्था ता पेक्ख पेक्ख (उपसृत्य, आरण्यकां दर्शयति)

विदू (दृष्ट्वा सहर्षं) सफलो मे परिस्समो सोत्थि होदीए।

आर (सलज्जं कमलिनीपत्राख्यपनीय उत्तिष्ठति)

मनो। अअ वसंतअ तुह दंसणेण एव्व अवगदो विअसखो एसं दावी जेण सअं एव्व णलिनीपत्ताइं अणवेइं ता अणुगह्णादु अओदुमाइं।

आर (सोद्वेगं) अइ परिहासशीले! कीसमं लज्जावेसि? (किञ्चित्पराङ्मुखी तिष्ठति)

विदू (सविषादं) चिट्ठदु दाव णलिणीपत्ताइ अदिल- ज्जातुआदे पिअसही ता कहं एदाणं समाअमो भविस्सदि।

मनो (क्षणं विचिन्त्य सहर्षं) वसन्तअ! एव्व विअ कधं कथअति

विदू। साहु पिअसही साहु पिअसही (अपवार्य्य) जाव एव्व तुह्मेण वच्छ गगहणं करेत्थ दाव एव्व अहं वि वअस्सं गह्णिअ आ अच्छामीति निष्क्रान्तः॥

मनो। अदि को वणि उट्ठेहि २ णच्चिदव्वं अह्मेहिं तस्स एव्व णाउ अस्सणच्चिदस्से सत्ताएहि. पेक्खागारं एव्व गच्छह्म [परिक्रम्यावलोक्य] इदं पेक्खागारं जाव एहि पविस्सह्म (प्रविष्टकेनावलोक्य) साहु सव्व सज्जीकिदं देवीए आअव्वं।

॥ततः प्रविशति देवी सांकृत्यायनी विभवतश्च सपरिवारः॥

वासवदत्ता। भअवदि अहो देक विन्तणं जेण एदं गूढउत्तं तणाडओ बणिबन्धं साणुभअं विअ अह्माणं अअ उत्त चरिदं आदिट्ठ पुव्व विअ दिसंतं अहि अअरक्को- इहल वड्ढीअदि।

सांकृत्यायनी। आयुस्मति आश्रयगुणएवायमीदृशः यदसारमपि काव्यं शृण्वतां श्रवणसुखमुत्पादयन्ती। पश्य—

प्रायोयत्किञ्चिदपि प्राप्नोत्यौत्कर्षमाश्रयान्महतः।

सन्तिभकुम्भतटगतमेति शृङ्गारतां भस्म (१)॥ १॥

---

(१—प्रायः यत् किञ्चिदपि वस्तु महतः आश्रयात् औत्कर्षं प्राप्नोति। तद्-

वासव (सस्मितं) अअवदिसव्ववह्नहोजामादोत्ति जाणी एव्व ता किं एदेण कहाणुबन्धेण चरंतं एव्व णधि दव्वदट्ठं।

सांकृत्या। एव्वं इन्दीवरिके प्रेचागृहमादेशय।

चेटी। एदु एदु भट्टिणी (सर्व्वाः परिक्रामन्ति)

सांकृत्या (विलोक्य) अहो प्रेचणीअता प्रेचागृहस्य!

आभाति रत्नशतशोभितशातकुम्भ-
स्तम्भावसिक्तपृथुमौलिकदामरम्यं।
अध्यासितं युवतिभिर्विजिताप्सरोभिः
प्रेचागृहं सुरविमानसमानमेतत् (२)॥ २॥

मनो। आरण्यके (उपसृत्य) जेदु जेदु भट्टिणी।

वासव। मनोरमे अदिक्कं दाखुसंज्ञाता गच्छ हलहुहणेवच्छं।

उभे। जंदेवी आणवेदित्ति। (प्रविशति)

वासव। आरस्थिए एदेहिं एव्व मन्दङ्ग पिणद्धेहिं आभरणेहिं नच्छभूमिं गदुअ अप्पाणं पसादेहि (आभरणान्य-

यथा—भस्म अतियत् सामान्यवस्त्वपि मत्तेभानां मदमत्त गजानां कुम्भ प्रदेशं गतं सत् शृङ्गारताम् अलङ्करणीयताम् एति।

(२)—एतत् प्रेचागृहं आमोदमन्दिरं, सुरविमानसमानम् आभाति, विमानं सार्वभौमगृहभेदः। कीदृशं तत्? इत्याह—रत्नानां शतानि तैः शोभिताः ये शतकुम्भस्तम्भाः सुवर्णस्तम्भाः, तेषु अवसिक्तानि पृथुमौलिकानि दामानि यत्र तादृशं रम्यं मनोहरम्। किञ्च विजिताः अप्सरसः अप्सरोङ्गनाः यैः तादृशैः युवतिभिः अध्यासितम् अधिष्ठितम्॥

ज्ञादवतार्य्य आरख्यकायाः समर्पयति) मनोरमे! तुमं विणलगिरिग्गहणपरितुट्ठेण तादेण अज्ज उत्तस्स दिसाइं आभरणाइं इन्दिवरिआस आसादो गिह्णिअ वच्छभूमिं गदुअ अप्पाणं मंडेहि जेण सरिसादो ससि भट्टाराअस्स।

मनो (इन्दिवरिकासकाशादाभरणानि गृहीत्वा सहारख्यकया निष्क्रान्ता)

इन्दीव। एदं आसणं उवविसदु भट्टिणी।

वासव (आसनं निर्दिश्य) उपविशिदुअ भअवदी।

उभे (उपविशत:)

॥ ततः प्रविशति गृहीतनेपथ्या (३) कञ्चुकी ॥

अन्तःपुराणां विहितव्यवस्थां पदेपदेहं स्खलितां निरुन्धन्।
जरातुरस्सम्प्रति दण्डनीत्या सर्व्वं नृपस्यानुकरोमि वृत्तम् (४)॥ २

अज्ञापितोऽस्मि विमानिताशेषशत्रुसैन्येन यथार्थनाम्ना महसेनेन समादिश्यतामन्तःपुरेषु यथा श्वो वयमुदयनोत्सवमनुभवामः अतोयुष्माभिरुत्सवानुरूपवेषोज्ज्वलेन परिजनेन सह मन्मथोद्यानङ्गन्तव्यमिति।

---

(३)—गृहीतवेशः।

(४)—अहं अन्तःपुराणां विहितव्यवस्थां पदे पदे अस्खलितां यथास्यात्तथा दण्डनीत्या नियमं रक्षन् रक्षां कुर्वन्—नृपस्य सर्वं वृत्तम् अनुकरोमि, नृपस्येव दण्डनीत्या व्यवहारकरणात्। परमिदानीं जरातुरोऽभवमिति शेषः।

सांकृत्या। (कञ्चुकिनं निर्दिश्य) राजपुत्रि! प्रवृत्ता प्रेक्षा दृश्यतां

कञ्चुकी। तदेतदादेष्टव्यं परिजनेन सहागन्तव्यमिति।

गृहीतनेपथ्येति नादेष्टव्यम् । कुतः ?—

पादैर्नूपुरिभिर्नितम्बफलकैः सिञ्जानकाञ्चीगुणैः
हारापादितकान्तिभिस्तनतटैः केयूरिभिर्बाहुभिः।
कर्णैः कुण्डलिभिः करैस्सवलयैः सस्वस्तिकैर्मूर्द्धजै-
र्देवीनां परिचारिकापरिजनोऽप्येतेषु संदृश्यते (५)॥४॥

न खलु किञ्चिदत्रापूर्व्वमनुष्ठेयं, केवलं स्वाम्यादेश इति मत्वाहं समादिष्टः; तदाज्ञाशेषं राजपुत्रै निवेदयामीति [ परिक्रम्यावलोक्य च ] इयं वासवदत्ता वीणाहस्तया काञ्चनमालयानुगम्यमाना गन्धर्व्वशाला प्रविष्टा, यावदस्याः कथयामि [ परिक्रमति ]

ततः प्रविशति गृहीतवासवदत्ता, नेपथ्यासनस्था।
आरण्यका वीणाहस्ता काञ्चनमाला च॥

आर। हञ्जे कञ्चणमाले! कीसउण चिरायदि अज्जवीणा आरिओ।

---

(५) – नूपुरिभिः पादैः, सिञ्जानकाञ्चीगुणैः नितम्बफलकैः, हारैरापादिता सम्पादिता: कान्तयो यत्र तादृशैः स्तनतटैः, केयूरिभिः बाहुभिः, कुण्डलिभिः कर्णैः सवलयैः करैः, सस्वस्तिकैः मूर्द्धजैः उपशोभितः एव दृश्यमानः देवीनां परिचारिकापरिजनः एतेषु एव स्थानेषु सन्दृश्यते। इत एव भागच्छन् यथार्ह इति भावः।

काञ्च। भट्टिदारिए! दिठ्ठोदेण एक्को उम्मत्तो तस्स वअणं सुणि अचिन्तिण भाविदो ओहसन्तो चिठ्ठई।

आर [सहस्ततालं विहस्य] हञ्जे सुठ्ठएद पुच्छदि सरिसा सरिसे दच्छन्तोति दुवेयत्थ उम्मत्ता।

साङ्कृत्या। राजपुत्रया: सदृश आकारं पश्यास्यस्यास्ताशेना कारेणावश्यं त्वदीयां भूमिकां सम्भावयिष्यति।

कञ्चु (उपसृत्य) राजपुत्रि! देवस्त्वामाज्ञापयति श्वोऽत्रभ्य मस्माभिर्वीणां वादयन्तीं आवितव्या तत्तया नवतंत्री-सज्जया घोषवत्या स्थेयमिति।

आर। जइ एव्वं लहुवोणाआरियं विसज्जेसि।

कञ्चु। एष वत्सराजं प्रेषयामीति (निष्क्रान्त:)

आर। कञ्चनमाले! उवणेहि सेघोसवदीं जावसे तन्तीओ परिक्खेसि।

काञ्चन [वीणां समर्पयति]

आर [उत्सङ्गे वीणां कृत्वा सारअति]

॥ ततः प्रविशतिगृहीतवत्सराजनेपथ्यासनोरमा ॥

[स्वगत] चिराअदि महाराओ किण कहिदं वस्स तएग अहवा देवो एभा अदि ज इदाणिं आ अच्छे तदो रमणिज्जं हवे॥

॥ तत: प्रविशति राजा, अनङ्गुण्ठितशरीरो विदूषकश्च ॥

राजा। सन्तापं प्रथमं तथा न कुरुते शीतांशुरद्यैव मे, निश्वासा: ग्लपयन्त्यजस्रमधुनैवोष्ठेस्तया नाधरम्।

सम्प्रत्येव मनो न शून्यमलसान्यङ्गानि नो पूर्व्ववत्,
दुःखं याति मनोरथेषु तनुतां सञ्चिन्त्यमानेष्वपि (६)॥५॥
वयस्य ! सत्यमेवोक्तं मनोरमया तथैषा मम प्रियसखी महाराजस्य देव्या दर्शनपथात्ऽपि रक्ष्यते, तदयं समागमोपायोऽद्य रात्रावस्माभि रुदयन् चरितं नाम नाटकं देव्या पुरतो नर्तितव्यं तत्रारण्यका वासवदत्ता भविष्यति, अहमपि वत्सराजः तच्चरितेनैव सर्व्वं शिक्षितव्यं तदागत्य स्वयमेव स्वां भूमिकां कुर्व्वाणः समागमोत्सवमनुभवत्विति।

विदू। ज इमं ण पत्तिआअसि एसा मणोरमा तव वेस धारयन्ती चिट्ठई ता उत्तसप्पिअसअं एव्व पुस्सं।

राजा [ उपसृत्य ] मनोरमे ! सत्यमिदं यद्वसन्तकोऽभिधत्ते

मनो। भट्टा स च मण्डअ एदेहिं आभरणेहिं आप्पाणं

[ इत्याभरणान्यङ्गादवताय्य समर्पयति ]

राजा ( परिदधाति )

विदू। एदे क्खु, राआणो दासी एवि एव्वं णच्चाविअंति अहो कज्जस्स गुरु अदा ! !

(६)–शीतांशुः हिमकिरणः चन्द्रमा प्रथमं यथा सन्तापमकरोत्, अद्य तथा नैव कुरुते निश्वासाः यथा भजस्रं निरन्तरं क्षपितवन्तः क्लेशितवन्तः, अधुना तथा नैव क्षपयन्ति; ओष्ठोऽपि तथा न क्षपयति; अधरमपि तथा न क्षपयति; सम्प्रति मनोऽपि पूर्व्ववत् नैव शून्यम्; अङ्गान्यपि पूर्व्ववत् नो अलसानि। कुतः ? इत्याह–मनोरथेषु अभिलषितवस्तुषु सञ्चिन्त्यमानेष्वपि दुःखं तनुतां याति यत इत्यर्थः॥

राजा [ विहस्य ] मूर्ख ! नैष कालः परिहासस्य, निभृतेन चित्रशालां प्रविश्य मनोरमया सह स्वनृत्यं पश्यता स्थीयतां [ उभौ तथा कुरुतः ]

ार। काञ्चणमाले ! चिट्ठदु विणापुच्छिस्सं दाव किंवि।

ाजा। शृणोमि तावत्किमयं उद्देश्यवर्तत इति [अवहितं शृणोति ]

ाथ। पुच्छदु भट्टिदारिआ आरणस्स च एव्वतादामदि एव्वं जहा अइ वीणां वादअन्तो अवहरेदिमं वच्छराओ अवसुसस्वन्धणादो मुञ्चेमित्ति।

ाजा। [प्रविश्य पटाक्षेपेण सहर्षं वस्त्रान्ते ग्रन्थितं बध्नाति]
एवमेवत् कः सन्देहः।
सपरिजनं प्रद्योतविस्मयमुपनीय वादयन् वीणां।
वासवदत्तामुपहरामि न चिरादेव पश्यास्यहम् (७)॥६॥
यः स्तु सन्निहितं सर्वं योगंधरायणेन॥
मए उणजाणिदं अज्ज उत्तो एसोत्ति साहु मणोरमे !
साहुर सोहणं सव्विदं।

साङ्कृत्या०। स्थान एव कृता स्ते भ्रान्ति मनोरमया, पश्य—
रूपन्नयनोत्सवास्पदमिदं वेषस्स एषोज्ज्वलः।
सा सत्त्वविरदोचिता गतिरियं वत्स ! त्वमत्यूर्जितं

---

(७)—वीणां वादयन् प्रद्योतं विस्मयम् उपनीय वासवदत्ताम् उपहरामि न [च]िरादेव अविलम्बेनेवेत्यर्थः – इति अहं पश्यामि प्रत्यक्षएवेत्याशयः।

लीला सैव सएष सान्द्रजलदह्लादानुकारी स्वरः
साचाद्दर्शित एष नः कुशलया वृूसेन् सएवानया (८) ॥७॥

वासव। हञ्जे इन्दीवरिए! बधेण अअउत्तेण अह्नं वीणं
सिक्खाविदा तासिकरेहि णिलप्पलदाम एण णिअलिं
[ शिरसोपनीय नीलोत्पलदामार्पयति ]

इन्दी [ तथा कृत्वा पुनस्तथैवोपविशति ]

आरण्य। कांचनमाले! कहेहि कहेहि।
णं सच्च एव्व मंते दिता दोजइ वीणं वादअन्तो।
अवहरदिनं वत्सराओ तदो अवसं बन्धणादो मुंचेमित्ति ॥८॥

काञ्चन। भट्टिदारिए! सव्वं तहा करेहि जइ वच्छराअस्स
अवस्सं बहुमदा होसी [निष्पादितमेव काञ्चनमालया
तदस्माभिरालपितम्।

आरण्य। अइ एव्वं ता आदरेण वादइस्सं [ गायन्ती
वादयति ]
धणअन्धणसंरुद्धंगअणं दट्ठमाणसं णेउं।
अहिलसइ राअहंसो दइ अधलूण अप्पणोवसइ ॥८॥

विदू। [ निद्रां नाटयति ]

---

(८)—इदं रूपं मद्दृष्टं साचाच्चक्षुर्विषयं त्वदीयमिति यावत्, तस्याः मनोरमायाः नयनोत्सवस्य आसदम् स्थानम् अभूदिति शेषः, तद्गतचित्तत्वात्; एषः उज्ज्वलः वेशोपि स एव तन्नयनास्पदएव; एवमुत्तरत्र। अनया कुशलया मनोरमयैव साचाद्दर्शितः एषः प्रभूतः; अत इदानीं यावे—सएव वर्णितप्रकारएव सः नः अस्मान् वृूसेत् पृथक्कुर्यादिति खेदः।

मनो [हस्तेन चालयन्ती] वसन्तश्र ! पेक्ख पेक्ख प्रियसहि मे णच्चइ ।

विदू · (सरोष') दासीए ! सुदे तुमं विणदेसिदेसु विदुं जदप्पहुदि पिअवअस्सेण आरम्भिआ दिट्ठा तदन्थ हुद्दितेण सह मए दिवारतं णिद्दा ण लद्धा ता णिक्कमिअ सुविसस्स' [ निष्क्रम्य शेते ]

आरण्य। (पुनर्गायति)

अहिणवरा अक्खि त्ता महुअरि आवा मएण कामेश्व।

उत्तमइ पत्यन्ती दट्ठं पिअदंसणदइअं ॥ १० ॥

राजा (तत्च्चणं श्रुत्वा सहसोपसृत्य) साधु राजपुत्रि! अहो गीतमहो वादित्रं तथाहि—

व्यक्तिव्यञ्जनधातुना दशविधेनाप्यत्र लब्धामुना
विस्पष्टोद्रुतमध्यलम्बितपरिच्छिन्नास्त्रिधायं लयः ।
गोपुच्छप्रमुखाः क्रमेण यतयस्तिस्रोपि सम्पादिता-
स्तत्त्वौजोनुगवाश्च वाद्यनिधयः सम्यक् त्रयो दर्शिताः(९)॥११॥

आरण्य (वीणां परिष्वजग्रासनादुत्थाय राजानं साभिलाषं पश्यन्ती) उज्जुआ अप्पणमासि।

---

(९)—दशविधेनापि अमुना श्रुतेन व्यञ्जनधातुना व्यक्तिः लब्धा ; द्रुता वृत्तिः, मध्यमा वृत्तिः, विलम्बिता वृत्तिः एवं तिसृभिर्वृत्तिभिः परिच्छिन्नः अयं लयः विस्पष्टः ; गोपुच्छप्रमुखाः तिस्रोऽपि यतयः क्रमेण सम्पादिताः ; तत्त्वादयोवाद्यनिधयोऽपि त्रयः सम्यक् दर्शिताः ; अतः प्रशस्यत इति भावः। सङ्गीतधीभिर्बोध्यमेतत् स्फुटं नान्यैरिति दिक् ॥

राजा। (सस्मितं) यदहमिच्छामि तत्ते भूयात्॥

काञ्चन। (आसनं निर्दिश्य) इद एव्व उपविसदु उपज्झा-
रणिकाग्रआमो।

राजा। (उपविश्य) राजपुत्रि! क्वेदानीमुपविशतु।

काञ्चन। (सस्मितं) दाणिं एव्व भट्टिदारिआ विज्जामाणेण-
परितोसिदा तुह्मेहिं ता अरुहदि एव्वं एसा उव-
ज्झाअ पाठिआए।

राजा। उपविशत्वहेयमर्धासनस्य। राजपुत्रि! स्थीयतां।

आर। (काञ्चनमालां पश्यति)।

काञ्चन। (सस्मितं) भट्टिदारिए! उपविस को एत्थ दोसो
सिस्सविसेसा क्खु तुमं।

आर। (सलज्जोपविशति)

वासवदत्ता। (सलज्जं) भअवदिए अह्नि अङ्गपिदक्वं
णहु अहं तस्मिं काले एकासणे अज्ज उत्तेण सह
उवट्ठिदा।

राजा। राजपुत्रि! श्रोतुमिच्छामि वादय वीणाम्।

आर। (सस्मितं) कञ्चणमाले! चिरं क्खु मम वादअन्तीए
परिस्समो जादो दाणिं णिस्सहाइं अंगाइं ता ण
सक्कुणोमि वादयिदुं।

काञ्चन। उपज्झा सुठ्ठु परिस्सन्ता भट्टिदारिआ कवो-
लतलबंधसे अलवाए पेक्ख सेवेवन्ति अग्गहत्था ता
समस्सत्था होदु मुहुत्तअं।

राजा। काञ्चनमाले! युक्तमभिहितं (हस्ते गृहीतु मिच्छति)

आर। ( हस्तमपसारयति )

वासव। सासूअं भअवदि अइ एदं वितुए किदं पडुअहं
काञ्चणमाला कव्वेण वंचइदव्वा।

साङ्कृत्या। (विहस्य) आयुष्मति! ईदृशमेव काव्यं भविष्यति।

आर।(सरोषमिव) वेहि कञ्चणमाले! २ ण मे बहु मदासि।

काञ्चन। [सस्मितं] जई अहं चित्तन्ती ण बहु मदा ता एसा-
गच्छामि [ इति निष्क्रान्ता ]

आरण्य। (ससम्भ्रमं) कञ्चणमाले! चिट्ठ २ अअंदे अगग
हत्था समप्पिदो।

राजा। ( आरण्यिकाया हस्तं गृहीत्वा )

सद्योवश्यायबिन्दुर्व्यतिकरशिशिरः किं भवेत् पद्मकोशो
ह्लादित्वं नास्य मन्ये सदृशमिदमुषस्येव वीतातपस्य।
मुञ्चत्येषो हिमौघं नखरजनिचरो हन्त! किं सोपि दाही
जातं खेदापदेशादविरतममृतं स्यन्दते व्यक्तमेतत्(१०)॥१२॥

अपिच—

---

(१०)—सद्यः अवश्यायस्य कुज्झटिकायाः बिन्दुर्यत्र एतादृशोपि पद्मकोशः किं व्यतिकर-शिशिरः भवेत्? नेत्यभिप्रायः। इदं हि ह्लादित्वं वीतातपस्य अस्य उषसि एव सदृशं समयोचितं न मन्ये, आश्चर्य्यमेतदिति यावत्। नखसदृश कारः एष रजनिचरश्चन्द्रः हिमौघं मुञ्चति, हन्त इति खेदे, सोपि हिममुक् उपचन्द्रोपि किं दाही?। इत्यत्र एतदेव व्यक्तम्—यत्, जातमपि अमृतं खेदापदेशात् हेतोः अविरतं स्यन्दते॥

एतेन बालविद्रुमपल्लवशोभापहारदक्षेण।
हृदये मम त्वयायं न्यस्तो रागः स्वहस्तेन (११) ॥१२॥

आरण्य। [स्पर्शविशेषं नाटयन्ती] हद्धि २ एदं मणोरमं परिसन्तीए अत्थं एव्व मे अङ्गाइ करेत्ति।

वासव। [सहसोत्थाय] भअवदि पेक्ख तुमं अहं उणअलि अस्स परेमि पेक्खिदुं।

साङ्कृत्या। राजपुत्रि! धर्म्मशास्त्रविहित एष गान्धर्व्वो विवाहः किमत्र लज्जास्थानं? प्रेक्षणीयमिदम्—तं न युक्तमस्थाने रसभङ्गं कृत्वा गन्तुम्।

वासव। [परिक्रामति,इन्दीवरीं विलोक्य] भट्टिणि! वस-न्तओ चित्तशालादुवारे पसुत्तो चिट्ठइ।

वासव। [निरूप्य] वसन्तओ एव्व एसो [विचिन्त्य] रक्खापिए होदव्वं ताबोधि अपुच्छि सन्दावणं (प्रबोधयति)।

विदू। (निद्राजडमुत्थाय सहसा विलोक्य) मणोरमे किंसाविअआदो वअस्सो अहवणच्चदि एव्व।

वासव। (सविषादं) अहं अअ उत्तो णच्चदि मणोरमा दाणीं कहिं।

विदू। एसा चित्तसालाए चिट्ठइ।

मनोरमा। (सभयं) कहं अणहा एव्वहि अ एकस्मि

---

(११)—त्वया एतेन स्वहस्तेन मम हृदये अयं रागो न्यस्तः। कीदृशेन स्वहस्तेन? बालविद्रुमपल्लवस्य नवकिसलयपत्रस्य शोभाया अपहारे दक्षः तादृशेन॥

देवीए मन्तिदं एदेण सुक्ख-चदुएण अस्सहा एव्व बुज्झिअ सब्बं आउलीकिदं।

वासव। (सरोषं हसन्ती) साहु मणोरमे! सोहणं तुए णच्चिदं।

मनो। (सभयं कम्पमाना पादयोर्निपत्य) भट्टिणी णहु अहं एत्थ अवरं झामि एदेणा क्खु हदासेणबलाहो अलङ्करणा ईङ्गहिअ दुव्वारट्टि देण इह निरुद्धा णं भणामइ अङ्कं दन्तो एसदो मुखणिक्कोसन्तरिओ ण केण विसुदो।

वासव। हञ्जे! उठ्ठहि जाणि दंसं वसन्तओ क्खु आरणिआ उत्त तं णाउए सुत्तधारो।

विदू। सम्मं एव्व चिंतेहि कहिं आरण्णिआ कहि वसन्तओत्ति।

वासव। मणोरमे! सुगहिदं करिअणं आअच्छदाव पेक्खणीअंसे पेक्खह्म।

मनो। (स्वगतं) दाणीं समस्ससिहह्मि। [प्रकाशम्, विदूषकं करे बध्नाति] हदास दाणिं अणुभव अत्तणो दुखअसस्स फलं।

वासव। (ससंभ्रममुपसृत्य) अज्जउत्त! पडिदह एदं अभङ्गं (इति पादयोः नीलोत्पलदामा नमयन्ती, सोत्प्रासं) सरिसं अउत्तो जं मणोरमेत्ति करीअणिलुप्पलदाम एण बन्धाविदोसि।

आरण्य । [सभयमुपसृत्य तिष्ठति] ।

राजा । [ सहसोत्थाय विदूषकं मनोरमाञ्च दृष्ट्वा । आत्मगतं ] —कथं विज्ञातोस्मि [देव्या वैलक्ष्यं नाटयति ]

साङ्कृत्या । [ सर्व्वानवलोक्य—सस्मितं ] कथमन्यदेवेदं प्रेक्षणीयकं संवृत्तं ? अभूमिरयमस्मद्विधानां—इति (निष्क्रान्ता) ।

राजा । [स्वगतं] अपूर्व्वोयं कोपप्रकारः ! दुर्लभमत्रानुनयं पश्यामि ! [विचिन्त्य] एवं तावत् करिष्ये (प्रकाशम्) देवि ! त्यज्यतां कोपः ।

वासव । को एस्थ कुविदो कथं ण कुपितासि ?

राजा । स्निग्धं यद्यपि वीक्षितं नयनयोस्ताम्रा तथापि
द्युतिर्माधुर्य्येऽपि सती स्खलत्यनुपदं ते गद्गदा वागियम् ।
निश्वासा नियता अपिस्तनभरोत्कम्पेन संलक्षिताः
कोपस्ते प्रकटं प्रयत्नविधृतोप्येषः स्फुटं लक्ष्यते (१२)॥१४॥
[ पादयोर्निपत्य ] प्रसीद २ ।

वासव । आरक्खिए तुमं कुविदाति सम्भावअन्तो अज्जउत्तो

(१२)—प्रयत्नेन विधृतं धैर्य्यीकृतमन्तर्दुःखं यया तादृशस्सा अपि ते तव कोपः प्रकटं यथास्यात् तथा स्फुटं लक्ष्यते । तथा हि—यद्यपि एवं ते वीक्षितं कृत्रिमं स्निग्धमस्ति, तथापि द्युतिः क्रोधजा स्वाभाविकी ताम्राऽभवत् । एवं ते इयं वाग् माधुर्य्या अपि अनुपदं स्खलती सती गद्गदा श्रूयते । निश्वासाः नियता अपि स्तनभरोत्कम्पेन संलक्षिताः भवन्तीत्यर्थः ॥

पेए पसीदत्ति पसादअदिता उव:सप्प (हस्तेनाकर्षयति)

आरख्य। [सभयं] णहु अहं किंविजाणामि।

वासव। आरस्सिए! तुमं कहं ण आणासि दाणिं दे सिक्खावेमि इन्दीवरिए गह्णएदं।

विदू। होदि अज्ज! कोमुदी महुसवे तुह चित्तं अअव हरिदुं वअस्सेण पेक्खणीअं अणुचिठ्ठिदं।

वासव। एदं तुह्माणं दुस्स अप्पेक्खि अहा सोभेजाअदि।

राजा। अलमयथा विकल्पनेन (१३) पश्य—

भ्रूभङ्गः क्रियते ललाटशशिन: कस्मात्कलङ्कोमुधा
वाताकम्पितबन्धुपुष्पसमतां नीतोधर: किं स्फुरन्।
मध्यश्चाधिककम्पितस्तनभरेणायं पुन: खिद्यते
कोपं मुञ्चत नैव चित्तहरणायैतन्मया क्रीड़ितम्(१४)॥१५॥

देवि! प्रसीद। [पादयो: पतति]

वासव। जाहे णिव्वुतं पेक्खणिअ ता एहि अभ्भंतरं एव्व पविशह्म [ निष्क्रान्ता ]

---

(१३)—अयथाविकल्पेन अवास्तविकसंशयेन अलम् आरोपितसंशयं माकार्षीरित्यर्थ:॥

(१४)—अयि वासवदत्ते! त्वया मुधा स्वीयै: भ्रूभङ्गै: स्वस्यैव ललाटशशिन: कलङ्क: कस्मात् क्रियते? एतस्य भ्रूभङ्गान् त्यजेत्यभिप्राय:। न च कदाचित् देव्या: कोपो लक्ष्यत इत्याह—देव्या: अधर: क्रोधात् स्फुरन् गद्गदवाचं प्रसूते इत्याशङ्का वृथैव, अपितु वाता कम्पितबन्धुपुष्पसमतां नीत:, स्फुरन्निति किम्? एवं मध्यश्च स्तनभर: सन् अधिककम्पित: लक्ष्यते, अयं मध्य: पुन: खिद्यते इति न। मया च चित्तहरणायैव मच्चित्तं हरतु इति मत्वैव क्रीड़ितं न, अतो याचे कोपं मुञ्चतेति॥

राजा । [विलोक्य] प्रसादं मकृत्वैव कथं गता देवी ?
खेदाम्भःकणभिन्नभीषणतरभ्रूभङ्गमेवं रुषा त्रासेना-
परमुत्प्लुतोत्प्लुतमृगव्यालोलनेत्रोत्पलं ।
उत्पश्यन्नहमग्रतो मुखमिदं देव्याः प्रियायास्तथा
भीतश्चोत्सुकमानसश्च महति क्षिप्तोस्म्यहं सङ्कटे(१५)॥१६॥
तद्यावदिदानीं शयनीयं गत्वा देव्याः प्रसादनोपायं
चिन्तयामि ॥

॥ इति निष्क्रान्ताः सर्वे ॥

॥ इति तृतीयोऽङ्कः॥

॥ इति गर्भनाटकम् ॥

---

(१५)—अहं देव्याः तथा प्रियायाः इदं मुखम् अग्रतः उत्पश्यन् सन् भीतश्च उत्सुकमानसश्च भवामि, किञ्चैवमहम् महति सङ्कटे क्षिप्तः । एतदेव वर्णयति—खेदाम्भइत्यादिना॥

# चतुर्थोऽङ्कः।

—:०:—

॥ ततः प्रविशति मनोरमा ॥

[ सोद्वेगं ] अहो! दीह रोसदा देवीए कहं एत्तिअं कालं वन्धाए पिअसहिए आरणिआ उवरि अणुकम्पं अगह्वइ ( सास्रं ) सा तवस्सिणी अत्तुणी बन्धणस्स किलेसेण तह णसंतप्पदि जहा भट्टिणी दंसण णिरासदाए ईरिसव्वसेदुक्खं जेण अज्ज एव्व अत्ताण वावाइअन्ती मए कहं विणिआरिदाएदं दुत्ततं भट्टिणी णिवेदित्ति वसन्तअ भणिअ आअट्ह्मि।

॥ ततः प्रविशति काञ्चनमाला ॥

कहं असेसन्तीएवि मए भअवईसं गच्चाइणी णदिठ्ठा? ( विलोक्य ) ता एदं विदाव मणोरमं पुच्छिस्सं (उपसृत्य) मणोरमे! अविजाणासि? कहिं भअईसं गच्चा अणिन्ति। मनो। [ विलोक्य अश्रूणि प्रमृज्य ] हला! कञ्चनमाले! दिट्ठा किं उण ताए पओअणं?।

काञ्चन। मणोरमे! अज्ज देवीए अङ्गारवदीए लेहोपेसिदो

तस्सिं वाचिदेवप्पपुस्स य अणादिट्ठं सन्तप्पिदु आरद्धा देवी ताविणोदण-णिमित्तां ताए भअवदीं अस्सेसामि।

मनो। हला किंउण तस्सिं लेहे अलिहिदं।

काञ्चन। जा मम भट्टिणिआ सा तव जणणी एव्व ताए भत्ता दिट्ठ मातादोदेता तव किं एदं आअक्खि दव्वं तस्स समहिअं संवच्छरं कड़िंग-हदएण वधस्स ता णव्जुतं एदं उत्ततं अणिट्ठं सुणिअह्मी वट्ठि देसं समत्थस्स भत्तुणीदे एव्व उदासीण तस्सं ओलंवि ट्ठुत्ति।

मनो। हला कञ्चणमाले! जदा दाव अअउत्तं तो भट्टिणीएण केण विवाह दव्वोत्ति भट्टिणा आणत्तं ता केण उणदाणीं सोलेह्मोसुणाविदो।

काञ्चन। अणुवाइ अतुह्निभूदाए मम्मा हत्यादीगल्लि असत्रं एव्व भट्टिणी एत्थ इदो।

मनो। तेण गच्छ तुमं एसा क्खु देवी ताए एंव्व सहदं तव लह्नीएं चिट्ठइ।

काञ्चन०। एह्नि भट्टिणी-सआसं गमिस्सं ( निष्क्रान्ता )

मनो। चिरं क्खु मे आरखिआ-सआसादो आअदा दिट्ठं च णिव्विणा सा तवस्सिणी अत्तणी जीविदेण कदाइ अम्मा हिदं भवे ता तहिं एव्व गच्छन्ति (इति निष्क्रान्ता)।

॥ इति प्रवेशकः ॥

॥ततः प्रविशति सोद्वेगा आसनस्था वासवदत्ता, सांकृत्यायनी विभवतश्च परिवारः॥

सांकृत्या। राजपुत्रि! अलमुद्वेगेन नेदृशो वत्सराजः कथमित्थं गतमपि भवत्या मातृष्वसृपतिं विज्ञाय वत्सराजो निश्चिन्तः स्थास्यति?

वासव (सास्रं) भयवदि अदिउज्जु, आदाणिं तुमं जस्स मएण कज्जं तस्स मम केरएण किं कज्जं, अज्जआए जुत्तं मम एदं आलिहिदं सा उण्णआणदि अज्जवि णारिसीण वासवदत्तेत्ति तुहउण एदं आरक्खिआए उत्ततं पच्चक्खं ता कहं एदं भणासि।

सांकृत्या। यतएव मे प्रत्यक्षं यतएव ब्रवीमि तेन कौमुदीमहोत्सवे त्वां हासितुं तथा क्रीड़ितुम्।

वासव। भअवदि एदं एत्थ एव्वं लह हसिदह्मि जेण भअवदीए पुरदो लज्जाए कहं विचिट्ठासि ता किं तक्केर काएकहाएणं एदेण एव्व पक्खवादेण एत्तिअभूसिं जिदह्मि (इति रोदिति)

सांकृत्या। अलं राजपुत्रि! रुदितेन। नेदृशोव त्सराजः (विलोक्य)

॥ ततः प्रविशति राजा विदूषकश्च ॥

राजा। वयस्य! क इदानीमभ्युपायः प्रियां मोचयितुम्?

विदू। भो वयस्य! मुञ्च विसादं अहंद उवाअं लाहइस्सम्।

राजा (सहर्षं) वयस्य! त्वरितमभिधीयताम्।

विदू। भो! तुमं दाव अणेअ समरसंघट्टप्पहारबाहुसलोपु पोन्धि अणेअ गजतुरअपाइक्कदुव्विसहबलसमुदिदो ता सव्ववलसन्दोहेण अन्तेउरं सुपड़िअं करिअ दाणिं एव्व आरम्भिअन्तो वाधेहि।

राजा। वयस्य! अशक्यमुपदिष्टम्।

विदू। किं एत्थ असक्कं जदो दाव कुज्ज वामण वुट्ठ कंचुइं व्वजिअ मज्झ,ओ अवरोधत्थि तहिं।

राजा। (सावज्ञं) किं असम्बद्धं प्रजल्पसि देव्याः प्रसादं मुक्त्वा नान्यः तस्या मोचणास्युपायः। तत्कथय कथं देवीं प्रसादयामि?

विदू। भो! मासोववासं करिअ जीविदं धारेहि एव्वं देवी चण्डी पसीदीस्सदि।

राजा (विहस्य) अलं परिहासेन, कथय कथं देवीं प्रसादयामि?

धृष्टः किं पुरतोऽवरुध्य निहसन् गृह्णामि कण्ठे प्रियाम्
किं वा चाटुशतप्रचण्डरचना-प्रीतां करिष्यामि ताम्।
किं तिष्ठामि कृताञ्जलिर्निपतितो देव्याः पुरः पादयोः
सत्यं सत्यमहो! नवेद्मि अनुनयो तस्याः कथं स्यादिति(१)॥१॥

(१)—धृष्टः सन् पुरतः अवरुध्य विहसन् प्रियां कण्ठे गृह्णामि किम्? अथवा तां चाटुशतप्रचण्डरचनया प्रीतां करिष्यामि? किं देव्याः पुरः पादयोः कृताञ्जलिः सन् निपतितः तिष्ठामि? अहो! कथन् तस्याः अनुनयः स्यात्—इति अहं न वेद्मि सत्यं सत्यं सत्यमेवेत्यर्थः।

तदेहि देवीसकाशमेव गच्छावः।

विदू। गच्छ तुमं अहं उण दाणिं एव्व बन्धणादो कहिं विपरिब्भ किअ आअदो ता ण गमिस्सं।

राजा (विहस्य, कण्ठे गृहित्वा, बलान्निवर्तयति) मूर्ख। आगम्यतां आगम्यताम् (परिक्रम्यावलोक्य च एत्य) देवी दन्तवलभीमध्यास्ते यावदुपसर्पामि (सलज्ज मुपसर्पति)।

वासव (सखेदम्) आसनादुत्तिष्ठति।

राजा। किं सुक्तमासनमलं मयि सम्भ्रमेण
नोत्थातुमित्यनुचितं मम तन्तुमध्ये!।
दृष्टिप्रसादविधिमात्रहृतोजनोऽय-
मत्यादरेण किमिति क्रियते विलक्षः (२)॥ २॥

वासव (मुखं निरूप्य) विलक्खो दाणिं तुम होसि।

राजा। प्रिये! सत्यमहं विलक्षः यत् प्रत्यक्षदृष्टापराधो भवति प्रसादयितुं व्यवसितोऽस्मि।

सांकृत्या (आसनं निर्दिश्य) महाराज! क्रियतामासन-परिग्रहः।

राजा (आसनं निर्दिश्य) एत एत देव्युपविशतु।

वासव (भूमौ उपविशति)।

---

(२) – अयि तनुमध्ये क्षीणमध्ये! मम सम्भ्रमेण अलम्? आसनं किं मुक्तम्? इत्थम् उत्थातुं न उचितम्। कुतोनिषिद्धमतइत्याह—दृष्टिप्रसादविधिनात्रेण हृतः अयं जनः अत्यादरेण किमिति विलक्षः लज्जान्यथा मनोन्तरं क्रियते—इत्याशङ्कते इति शेषः।

राजा। आः कथं भूमौ उपविष्टा देवी ! अहमप्यत्रैवोपवि
शामि (इति भूमावुपविशति कृताञ्जलिः) प्रिये !
प्रसीद प्रसीद किमिदं प्रणतेऽपि मयि गम्भीरतरं कोप-
मुद्वहसि ?

भ्रूभङ्गं न करोषि रोदिषि मुहुर्मुग्धेक्षणे ! केवलं
नातिप्रस्फुरिताधरानवरतं निश्वासमेवोज्झसि।
वाचं नापि ददासि तिष्ठसि परं प्रध्यातनम्रानना
कोपस्ते स्तिमितोतिपीड़यति मां गूढ़प्रहारोपमः (३)॥३॥

[इति पादयोः पतति]

वासव। अदि सुहिदोणंसि किं दाणिं दुक्खिदं जणं
विआरेसि उठ्ठेहि को एत्थ कुविदो।

सांकृत्या। उत्तिष्ठ महाराज ! किमनेन अन्यदेवतावदुद्वेग-
कारणमस्याः।

राजा (ससंभ्रमं) भगवति ! किमन्यत्।

सांकृत्या (कर्णे कथयति)।

राजा (विहस्य) यद्येतमलमुद्वेगेन मयापि ज्ञातं सिद्धयेवा-
स्मिन् प्रयोजने देवी तुष्टा वर्धतिष्यामीति नोक्तम्,

---

(३)—हे मुग्धेक्षणे ! भ्रूभङ्गं न करोषि, मुहुः केवलं रोदिषि, नाति प्रस्फुरिता-
धरा :निश्वासमेव अनवरतम् उज्झसि त्यज्यसि, वाचमपि न ददासि प्रत्युत्तरं न
करोषीत्यर्थः, प्रध्यातनम्रानना अन्यध्यानपरा नतवदना तिष्ठसि;—इत्यञ्च ते तव
स्तिमितः बहुकालस्थितत्वात् अचञ्चलः भावः गूढ़प्रहारोपमः अन्तर्वेदनाबोधात्,
माम् अति पीड़यति।

अन्यथा कथमहं दृढ़वर्म्मा वृत्तान्ते विस्रब्धस्तिष्ठामि मत्प्रतिपथान्यहानि तद्वार्ताया आगतायाः ? इदञ्च तत्र वर्तसे—

अस्मद्बलैर्विजयसेनपुरःसरैः सुरै-
स्तैराक्रान्तबाह्यविषयो विहितः प्रतापः।
दुर्गं कलिङ्गहतकः सहसा प्रविश्य
प्राकारमात्रशरणोऽशरणीकृतोसौ (४) ॥४॥

तदवस्थञ्च तं—

निर्दिष्टाक्रान्तमन्दं प्रतिदिनविरमद्घोरदासेरवृत्तं
सध्वंसं संप्रलीनद्विपतुरगनरक्षीणनिःशेषसैन्यम्।
अद्य श्वो वा विभग्ने झटिति मम बलैः सर्वतस्तत्र दुर्गे
बद्धं युद्धे हन्त! भगवति न चिराच्छ्रोष्यसि त्वं
कलिङ्गं (५) ॥ ५ ॥

सांकृत्या। राजपुत्रि! प्रथमतरमेव भवत्याः कथितं मया कथमप्रतिविधाय वत्सराजः स्थास्यतीति।

---

(४)—विजयसेनपुरस्सरैः सुरैः तैः अस्मद्वीरैः,विहितप्रलापः राजधानीस्थानां विपत्पुरदयात्, बाह्य विषयः राजधानीस्थः समुदायः आक्रान्तः। इदानीं सः कलिङ्ग-हतकः सहसा दुर्गं स्वराजाधानीस्थं प्रविश्य, प्राकारमात्रशरणः दुर्गप्राचीरमात्र-व्यवहितत्वात् तत्र सहायान्तराभावाच्च, इत्थम् असौ शरणीकृतः वशीकृतप्रायः॥

(५)—अयि भगवति! अद्य श्वोवा झटित्येव मम बलैः विजयसेनादिभिः तत्र दुर्गे सर्वतः भग्ने सति हन्त! कलिङ्गं युद्धे बद्धं इति न तु चिरात् श्रोष्यसि, अपितु अचिरादेव श्रोष्यतीति भावः॥

वासव। जइ एव्वं पिअं मे।

प्रविश्य [ प्रतिहारी ] जेदु भट्टा एसो क्खु विअअसेणो दिढ़अं कंचुइ सहिओ हरिस्सस्सु, तुप्फुल्लोअणो पिअणिवेदिदुकामो दुवारे चिट्ठइ।

वासव [ सस्मितं ] भअवदि जइ तक्केमि परिदोसिदह्मि अअउत्तेणेत्ति।

सांकृत्या। वत्सराजपक्षपातिनी खल्वहं न किञ्चिद्ब्रवीमि

राजा। शीघ्रं प्रवेशय तौ।

प्रतिहा। तहा [ इति निष्क्रान्ता ]

॥ ततः प्रविशति विजयसेनः कञ्चुकी॥

विज। भोः कञ्चुकिन्। अद्य स्वामिपदा द्रष्टव्याइति यत्सत्यमनुपमं कमपि सुखातिशयमनुभवामि।

कञ्चुकी। विजयसेन! अवितथमेतत्। पश्य—

सुखनिर्भरो ऽन्यथापि स्वामिनमवलोक्य भवति भृत्यजनः।
किं पुनरपि बलविघट्टननिर्व्यूढ़प्रभुनियोगभरः (६) ॥६॥

उभौ [ उपसृत्य ] विजयतु स्वामी।

राजा [ उभावपि परिष्वजते ]

कञ्चु। देव! दिष्ट्या वर्धसे।

---

(६)--भृत्यजनः स्वामिनम् अन्यथापि अवस्थान्तरमपि अवलोक्य स्वामिदर्शनसाचहेतोः सुखनिर्भवः भवति। किम्पुनः अरीबलानां विघट्टणेन निर्व्यूढ़ः सम्पन्नः प्रभोर्नियोगः येन तादृशः भरः भरणीयः भृत्य इत्यर्थः, एवञ्च तवातिशयसुखानुभवो भविष्यत्येव तत्र कः संशयः इत्याशयः॥

हत्वा कलिङ्गहतकमस्मत्स्वामिनिविशिते निजे राज्ये।
देवस्य समादेशो व्यवस्थापितो विजयसेनेन (७)॥ ७ ॥

वासव। अइ भअवइ! अहिजाणासि एदं कञ्चुइं?

सांकृत्या। कथं नाभिजानामि? ननु स एष यस्य हस्ते मातुःष्वसा ते पुत्रिकामनु प्रेषितवती।

राजा। साधु विजयसेन! महाव्यापारोऽनुष्ठितः।

विज [ पादयोः पतति ]

राजा। देवि! दिष्ट्या वर्धसे प्रतिष्ठितो राजेन्द्र दृढ़वर्म्मा।

वासव [ सहर्षं ] अणुगिहीदह्मि।

विदू। ईदिसे अब्भुदअअसिं राअउले एदं करणिज्जं [ राजानं निर्दिश्य, वीणावादनं नाटयन् ] गुरुपुत्ति! [आत्मनोपवीतं दर्शयन्] बह्मणस्स सक्कारः। [आरण्यकां सूचयन्] सव्व बन्धना मोक्खोत्ति।

राजा ( वासवदत्तामपवार्थ्य, चेटिकां ददत् ) साधु वयस्य!

विदू। होदि कहन्तुमं एहिं वि एत्थ समादिस्सासि?

वासव ( सांकृत्यायणीमवलोक्य सस्मितं ) मोइदाहदासेण आरणिया।

सांकृत्या। किं वा तपस्विन्या नयवञ्ज्या।

वासव। जह भअवदीए रोअदि॥

---

(७) – अस्मत्स्वामिनः आदेशात् युद्धानन्तरं तस्यैव निजे राज्ये, तस्मिन् निविशिते तत्रैव तमेव कलिङ्गहतकं हत्वा विजसेनेन मया भृत्येन देवस्य समादेशो व्यवस्थापितः प्रतिपालित इत्यर्थः॥

सांकृत्या। यद्येवमहमेव तावन्मोचयिष्यामि [इति निष्क्रान्ता]।

कञ्चु। इममपरं सन्दिष्टं दृढवर्म्मणा त्वत्प्रसादात् सर्वमेव यथाभिलषितं सम्पन्नं तदेते प्राणास्त्वदीयाः यथेष्टमिमान्विनियोक्तुं त्वमेव प्रमाणमिति।

राजा (सलज्जमधोमुखस्तिष्ठति)

विज। देव! शक्यमेव देवं प्रति विशेषं दृढ़वर्म्मणः कथयितुम्।

कञ्चु। यद्यपि तुभ्यं प्रतिपादितायाः प्रियदर्शिकायाः अस्मद्दुर्हितुः परिभ्रंशान्न मे सम्बन्धो जायत इति दुःखमासीत् तथापि वासवदत्तायाः परिणेनापि त्वया तदपनीतमेव।

वास० [साश्रं] अत्र कञ्चुइ कहं मे भइणी परिभट्टा ?

कञ्चु। राजपुत्रि! तस्मिन् कलिङ्गहतकावस्कन्दे विद्रुतेष्वितःस्ततोन्तःपुरजनेषु दिष्ट्या दृष्टामिदानीं न युक्तमत्र स्थातुमिति तामहं गृहीत्वा वत्सराजान्तिकं प्रस्थितः। ततः सञ्चिन्त्य तां विन्ध्यकेतोर्हस्ते निक्षिप्य निर्गतोस्मि। यावत्प्रतोपसागधाः तावत्तैरपि तत् स्थानं सह विन्ध्यकेतुना स्मर्तव्यतां नीतम्।

राजा [सस्मितं] विजयसेन! किं कथयसि ?

कञ्चु। तत्र चान्विष्यता मया न प्राप्ता। ततः प्रभृति नाद्यापि विज्ञायते क्व च गतेति।

[प्रविश्य] मनो। भट्टिणि! पाणसंसएव वट्टइ सा तवस्सिणी।

वासव [सास्त्रं] किं भण तुमं पिअदंसणात्तं तं जाणासि ?

मनो। णहु पिअदंसणा उत्त तं जाणामि। एसा क्खु आरणिआ कलव्वपदेसे आणीदं विसं पाइआ पाणसंसएव्वट्टदित्ति एवं मए णिवेदिदं ता परित्ताअदु भट्टिणी।

( इति पादयोः पतति )

वासव [स्वगतं] हद्धि हद्धि पिअदंसणा क्खु दुविमी अन्तरिदं आरणिआ उत्तं तेण अदिदुज्जणो खलोओ कदा इमं असहा सम्भावइस्सदि ? ता एदं एत्थ नुत्तं [ प्रकाशं, सम्भ्रमं ] मणोरमे! लहुअ इह एव्व आणेहि तं णाअलो आदो गन्धोदवि सविज्जो अज्जउत्तो एत्थ कुसलो।

( निष्क्रान्ता मनोरमा )

॥ ततः प्रविशति मनोरमया धृता सा विषवेग सात्मानं नाटयन्ती ॥

आरण्य। हला मणोरमे! कीसदाणिं मं अन्धआरं पवेसेहि।

मनो ( सविषादं ) हद्धि हद्धि दिट्ठि देसेत्थकं तं विसेण।

वासव (तां दृष्ट्वा) भट्टिणि! लहु परित्ताहि परित्ताहि गुरुई-भूदं सेविसं। (ससम्भ्रमं, राजानं हस्ते गृहीत्वा) अज्जउत्त ! उट्ठेहि लहु विवज्जइ क्खु एसा तवस्सिणी

( सर्वे पश्यन्ति )

कञ्चु (विलोक्य) सुसदृशी खल्वियं राजपुत्र्याः प्रियदर्शनायाः (वासवदत्तां निर्दिश्य) राजपुत्रि ! कुत इयं कन्यका ?

वासव । अज्जविग्न केउणो दुहिदा तं वा दिग्रविजग्रसेणेण आणिदा ।

कच्चु । कुतस्तस्य दुहिता ? सैवेयं राजपुत्री, हा हतोऽस्मि मन्दभाग्यः [ निपत्य भूमावुत्थाय ] राजपुत्रि ! इयं सा प्रियदर्शिका भगिनी ते ।

वासव । अज्जउत्त ! परित्ताहि परित्ताहि । मम भइणी विवज्जइ ।

राजा । समाश्वसीहि: समाश्वसीहि, पश्यामस्तावत्—कष्टं भोः कष्टं भोः ! ! !

सञ्जातसान्द्रमकरन्दरसां क्रमेण
पातुं गतश्च कलिकां कमलस्य भृङ्गः ।
दग्धा निपत्य सहसैव हिमं नवैषा
वामे विधौ न हि फलन्त्यभिवाञ्छितानि (८)॥ ८ ॥

मनोरमे ! पृच्छतां तावत्— किं ते बोध इति ।

मनो । सहि! किं ते बोधोत्ति? (सास्रं, पुनश्चालयती) सहीणं भणामि किं ते बोधोत्ति ?

प्रिय [ अविस्पष्टं ] जं एदाए विणामए महाराओ दिट्ठइ [ इत्यर्द्धोक्ते भूमौ पतति ]

राजा [ सास्रं ]

---

(८)—सञ्जातसान्द्रमकरन्दरसां कमलस्य कलिकां पातुं भृङ्गः क्रमेण गतः । सहसैव हिमं निपत्य नवा एषा कमलिनी दग्धा । अतउच्यते—विधौ वामे सति अभिवाञ्छितानि न हि फलन्ति ।

एषा मीलयतीदमीक्षणयुगं जातं ममान्धत्रं दिशः
कण्ठोऽस्याः प्रतिरुध्यते मम गिरोनिर्यान्ति कृच्छ्रादिमाः।
एतस्या वसितं हृतं मम तनुर्निश्चेष्टता या गता
मन्येऽस्या विषवेगएव हि परं सर्वन्तु दुःखं मनः (९)॥९

वासव (सास्रं) पिअदंसणे! उट्ठेहि पेक्ख एसो महाराओ चिट्ठइ कहन्ते अणाविसेसिट्ठा कि दाणिं मए अवरज्झं अज्जणन्तीए जेण कुविदा मं ण आलवसि तापसीद! उट्ठहि उट्ठहि, बाहुपुणो अवरज्झसं [ उर्ध्वमवलोक्य ] हा देव्व हदअ किं दाणिं मए अवकिदं जेण एदविस्थं गदा मे भइणी आदंसिदा ( प्रियदर्शिकाया उपरि पतति )

विदु। भो वअस्स! कहं तुमं मूढ़ो एव्व चिट्ठसि ण एसो विसादस्स कालो विसमाखुगई विसस्स ता दंसेहि अप्पणो विज्जापहावं।

राजा। सत्यमेवैतत्। ( प्रियदर्शिकामालोक्य ) मूढ़एवाहमेतावतीं वेलान्तदहमेनां जीवयामि सलिलं सलिलं !!!

विदू ( निष्क्रम्य, पुनः प्रविश्य ) एदं सलिलम्।

राजा [ उपस्पृश्य, प्रियदर्शनाया उपरि हस्तं निधाय, मन्त्रस्मरणं नाटयति ]

---

(९) —एषा इदम् ईक्षणयुगम् स्वकीयं मीलयति यदा, तदा मम दिशः सर्वस्याः आन्ध्यं जातं सम्पन्नम्; यदा अस्याः कण्ठः प्रतिरुध्यते, तदा मम इमाः गिरः कृच्छ्रात् निर्यान्ति; यदा एतस्याः वसितं वाञ्छितं हृतं, तदा मम तनुः निश्चेष्टतां गता; हि यतएवम् अतोमन्ये—अस्याः विषवेगे एव सर्वं मनः दुःखमिति॥

प्रिय [ शनैरुत्तिष्ठति ]

वासव। दिट्ठिआ पच्चुज्जीविआ भट्टणी।

विजय। अहो देवस्य विद्याप्रभावः !!

कञ्चु। अहो सर्व्वत्राप्रतिहता नरेन्द्रता देवस्य।

प्रिय (शनैरुत्थायोपविश्य च जृम्भिकां नाटयन्ती, सविसादमविस्पष्टं) मणोरमे ! चिरं क्खु सुत्तह्मि।

विदू। यस्य निरुढ़ं देवीदक्खिणं।

प्रिय ( साभिलाषं )।

राजा ( तन्निरुप्य, सलज्जं किंचिदधोमुखो तिष्ठति )

वासव [ सहर्षं ] अज्जउत्त ! किं दाणिं वि एसा असहेव्वं करेदि ?

राजा ( सस्मितं )

स्वभावस्था दृष्टिर्न भवति गिरो नाति विशदा
तनुं सीदत्येषा प्रकटपुलकास्येव कर्णिका।
यथा चायं कम्पस्तनभरपरिक्लेशजनन
स्तथानाद्याप्यस्या नियतमखिलं शाम्यति विषम् (१०)॥(१०)॥

कञ्चु। [ प्रियदर्शिकां निर्दिश्य ] राजपुत्रि ! एष ते पितृ राज्ञाकरः पादयोः पतति।

---

(१०) – अद्यापि अस्याः नियतमखिलं विषं न शाम्यति। कुतीबुध्यत इत्याह— अद्यापि अस्याः दृष्टिः स्वभावस्था न भवति, गिरः न अतिविशदाः पूर्व्ववत् सम्पन्नाः -इति शेषः, प्रकटपुलकस्य कर्णिका इव एषा तनुं सीदति, स्तनभरपरिक्लेशजननश्च अयं कम्पः दृश्यतएव। यथाचैव तथैव तथोक्तमिति भावः॥

प्रिय [ विलोक्य ] कहं कंचुई अमविय अवसू ( सास्रं ) हा तात ! हा अज्जुए !!

कञ्चु । अलं रादितेन ? कुशलिनौ ते पितरौ वत्सराजप्रभावात् पुनस्तदवस्थमेव राज्यम् ।

वासव ( सास्रं ) एहि अलिअसीले दाणिं विदे भइणी आसिणेहिं दंसेहि ( कण्ठे गृहीत्वा ) दाणिं समस्सत्थम्हि ।

विदू । होदि तुमं भइणीं गह्लिअ कण्ठे एव्वं परितुट्ठासि वोदिअस्स पारिदोसिअं विसुमरिदम् ।

वासव । वसन्तअ ! ण विसुमरिदम् ।

विदू । ( राजानं निर्दिश्य, सस्मितं ) वोदि अपसारेहि हत्थं भइणीए अग्ग हत्थं दे पारितोसिअ दाविस्सं ।

राजा ( हस्तं प्रसारयति )

वासव ( प्रियदर्शिका-हस्तमर्पयति )

राजा ( हस्तं प्रगृह्य ) किमनया संप्रत्येव कथमपि प्रसादिता ।

वासव । को तुमं अगह्लदुं पुड़मं एव्व ता देणइ अट्ठिस्स ।

विदू । भो माणणीआ क्खुदेवी सासे पडिच्छिसं करेहि ।

वासव ( राज्ञोहस्तं वलादाकृष्य प्रियदर्षिकामर्पयति )

राजा ( सस्मितं ! देवि ) प्रभवति कुतोन्यथा कर्तुं विभवः ?

वासव । अज्ज उत्त अदोवि परं किं दे पिअङ्करियदु ?

राजा । किमतः परमिदं ? पश्य—

निःशेषं दृढ़वर्मणा पुनरपि स्वाराज्यमध्यासितं
त्वं कोपेन सुदूरमप्यपहृता सद्यः प्रसन्ना मम
जीवन्ती प्रियदर्शिका च भगिनी भूयस्त्वया सङ्गता
किञ्च स्यादपरं प्रियं प्रियतमे ! यत् साम्प्रतं प्रार्थ्यते(११)॥११॥

तथापीदमस्तु भरतवाक्यम्—

उर्वीमुद्दामसस्यां जनयतु विसृजन्वासवो वृष्टिमिष्टा-
मिष्टैस्त्रैविष्टपानां विदधतु विधिवत् प्रीणनं विप्रमुख्याः ।
आकल्पान्तञ्च भूयात् स्थिरसमुचिता सङ्गतिः सज्जनानां
निश्शेषं यान्तु शान्तिं पिशुनजनगिरोदुःसहावज्र-लेपाः॥१२॥

( इति निष्क्रान्ताः सर्व्वे )

## ॥ इति चतुर्थाङ्कः ॥

---

(११)—दृढ़वर्म्मणा पुनरपि निःशेषं स्वाराज्यम् अध्यासितम्, किञ्च त्वं कोपेन सुदूरम् अपहृतापि सद्यः मम उपरि प्रसन्ना, किञ्च भगिनी प्रियदर्शिका जीवन्ती अपिच त्वया भूयः सङ्गता । हे प्रियतमे ! अपरं प्रियं किं स्यात् यत् साम्प्रतं प्रार्थ्यते ? वर्णितप्रियेभ्योऽन्यत् प्रियं किमपि नास्तीति भावः ॥

(१२)—वासवः इन्द्रः इष्टां यथाकालां यथापरिमितां वृष्टिं विसृजन् उर्वीं उद्दामसस्यां शस्योत्पादन-प्रतिबन्धरहितां जनयतु, विप्रमुख्याः ऋत्विजो ब्राह्मणाः इष्टैः-यागः चै विष्टपानां देवानां विधिवत् प्रीणनं विदधतु, सज्जनानां सङ्गतिः आकल्पान्तं कल्पकालमभिव्याप्य स्थिरा समुचिता च स्यात्, दुःसहाः वज्रलेपाः पिशुनजनगिरः निःशेषं शान्तिं यान्तु च ।

## ॥ इति प्रियदर्शिका नाम नाटिका समाप्ता ॥

# THE
# PÂRVATÎPARIṆAYA
OF
## BÂṆABHATTA.

EDITED
BY
MANGESH RÂMKRISHṆA TELANG

Fourth Edition.

PUBLISHED BY
PÂNDURANG JÂWAJÎ,
PROPRIETOR OF THE "NIRNAYA-SÂGAR" PRESS,
BOMBAY.

1923.

*Price 5 Annas.*

॥ श्रीः ॥

# महाकविश्रीबाणभट्टप्रणीतं

# पार्वतीपरिणयम् ।

मङ्गेश रामकृष्ण तेलङ्ग इत्यनेन संस्कृतम् ।

तस्येदं चतुर्थं संस्करणं

पणशीकरोपाह्वलक्ष्मणशर्मतनुजनुषा वासुदेवशर्मणा संशोधितम् ।

तच्च

मुम्बय्यां

पाण्डुरङ्ग जावजी

इत्येतैः स्वीये निर्णयसागराख्यमुद्रणयन्त्रालये

मुद्रयित्वा प्रकाशितम् ।

शाके १८४५, सन १९२३.

मूल्यं ५ आणकः ।



# विज्ञप्तिः ।

अस्य नाटकस्य प्रणेता महाकविर्बाणभट्टः ख्रिस्तवर्षीयसप्तमशतकपूर्वार्धसमुद्भूतस्य कान्यकुब्जाधिपतेर्हर्षवर्धनस्य सभामलंचकार । बाणभट्टकृतिषु कादम्बरीपूर्वभागः, हर्षचरितम्, चण्डीशतकम्, पार्वतीपरिणयं चेति प्रबन्धचतुष्टयमेव संप्रत्युपलभ्यते । निरुक्तप्रबन्धचतुष्टयाल्लभ्यं बाणभट्टचरितं समासेनात्र संगृह्यते । तथाहि—कश्मीरेषु वात्स्यायनवंशेऽस्य संभूतिः । अस्य पिता चित्रभानुः । माता राजदेवी । सा चास्य बाल्य एव पञ्चत्वं प्राप । चतुर्दशवर्षदेशीये च बाणे पितापि दिवं जगाम । बभूवुरस्य विविधकलाकुशला बहवो वयस्या इति । कृतश्चानेन हर्षचरितप्रस्तावे श्रीमद्व्यास–सुबन्धु–भट्टारहरिचन्द्र–सातवाहनप्रवरसेन–भास–कालिदास–आढ्यराजमहाकवीनां, श्रीमहाभारतबृहत्कथाप्रबन्धयोश्च सप्रशंसमुल्लेखः ।

'श्लोकबद्धा कादम्बरी मुकुटताडितकनाटकं च बाणभट्टेन प्रणीतमित्यपि ज्ञातम् । किं त्वेतद्ग्रन्थद्वयं नाद्याप्युपलब्धम् ।' इति काव्यमालायां प्रकाशितस्य चण्डीशतकस्य टिप्पण्यां कृतानेकप्राचीनकाव्योद्धारैर्महामहोपाध्यायैः पण्डितश्रीदुर्गाप्रसादैश्चोक्तम् । कादम्बर्या उत्तरभागस्तु बाणभट्टतनयेन भूषणभट्टेन पूरित इति प्रसिद्धमेव ।

केचिदाधुनिका बाणभट्टविरचितान्यग्रन्थेभ्यः पार्वतीपरिणयनाटकस्य रीतिवैलक्षण्यं पश्यन्तः नेयं बाणभट्टकृतिरिति तर्कयन्ति । तत्तु बलवत्प्रमाणाभावाच्चिन्त्यमेव सुधीभिरिति विज्ञापयति ।

मङ्गेशशर्मा ।

॥ श्रीः ॥

महाकविश्रीबाणभट्टप्रणीतं

# पार्वतीपरिणयम् ।

## प्रथमोऽङ्कः ।

आदौ प्रेमकषायिता हरमुखव्यापारलोला शनै-
वींराभारविघूर्णिता मुकुलिता धूमोद्गमव्याजतः ।
पत्युः संमिलिता दृशा सरभसव्यावर्तनव्याकुला
पार्वत्याः परिणीतिमङ्गलविधौ दृष्टिः शिवायास्तु नः ॥ १ ॥

अपि च ।

संपदमतरललभ्यामनन्यसामान्यबहलदर्पनिधेः ।
पुष्णातु चित्तयोनेरघटितघटनापटीयसी विभुता ॥ २ ॥

(नान्द्यन्ते)

सूत्रधारः—(सप्रणयमञ्जलिं बद्ध्वा ।)

ब्रह्मस्तम्बकुटुम्बस्य योगक्षेमविधायिनौ ।
आनन्दविग्रहौ भूत्यै भूयास्तामादिदम्पती ॥ ३ ॥

(इति पुष्पाञ्जलिं विकीर्य ।) आर्ये, इतस्तावत् ।

(प्रविश्य ।)

नटी—[1]अज्ज, इअह्मि ।

सूत्रधारः—आर्ये अद्य खलु किमप्यभिनवं पार्वतीपरिणयं नाम रूपकं द्रष्टुमभिलषति परिषदेषा ।

नटी—[2]अज्ज, तं उण कस्स कइणो किदी हुविस्सदि ।

---

१. आर्य, इयमस्मि ।

२. आर्य, तत्पुनः कस्य कवेः कृतिर्भविष्यति ।

सूत्रधारः—

अस्ति कविसार्वभौमो वत्सान्वयजलधिसंभवो बाणः ।

नृत्यति यद्रसनायां वेधोमुखलासिका वाणी ॥ ४ ॥

तद्विरचितेन विचित्रसंविधानेन वस्तुनानेन सामाजिकानुपस्थास्यामहे।

नटी—अज्ज, अण्णेसु णाडएसु वट्टन्तेसु कहं तहिं चेव्व तत्त-होदो अहिलासो ।[1]

सूत्रधारः—

संनिधानस्य सामग्र्यं रसानां परिपुष्टता ।

संदर्भसौकुमार्यं च सभ्यानां रञ्जने क्षमम् ॥ ५ ॥

तत एवाहं गुणग्राहितया तत्र प्रवृत्तः ।

नटी—जइ एवं जुज्जइ ।[2]

सूत्रधारः—(नटीं निर्वर्ण्य ।) आर्ये, पार्वतीपरिणयप्रसङ्गेऽपि किंनिमित्तं भवती विमनायमानेव विलोक्यते ।

नटी—अज्ज, इमिणा परिणअप्पसङ्गेण अह्माणं वि वच्छाए बालचण्डिआए अणुरूववरलाहमहूसवो कहं भविस्सदित्ति णिरन्दरं चिन्दाउलं होइ मे हिअअम् ।[3]

सूत्रधारः—अलं विषादेन ।

विधिरेव कन्यकानामभिमतवरयोजनार्थमुद्युङ्क्ते ।

अयमिह महतीदयितो मुनिरिव गिरिराजकन्यायाः ॥ ६ ॥

इति प्रस्तावना ।

---

१. आर्य, अन्येषु नाटकेषु वर्तमानेषु कथं तत्रैव तत्रभवतोऽभिलाषः ।

२. यद्येवं युज्यते ।

३. आर्य, अनेन परिणयप्रसङ्गेनास्माकमपि वत्साया बालचण्डिकाया अनुरूपवरलाभमहोत्सवः कथं भविष्यतीति निरन्तरं चिन्ताकुलं भवति मे हृदयम् ।

(ततः प्रविशत्याकाशमार्गेण नारदः ।)

नारदः—हन्त, जन्मनः प्रभृति न जहाति नूनमस्मानियममरकार्यघटनाकुतूहलिता । यतः ।

दक्षाल्लब्धसमुद्भवा तदनु तं त्यक्त्वा पतिद्रोहिणं
जाता संप्रति शैलराजसदने गौरीति दाक्षायणी ।
एतां योजयितुं हरेण हिमवत्सानौ तपस्तन्वता
कार्यं भावि समाकलय्य मरुतामद्य प्रवर्तामहे ॥ ७ ॥

(किंचिदन्तरमवतीर्यावलोक्य च ।) परिवहनाम्नः पवनस्य पन्थानं प्राप्तवानस्मि । तथा हि ।

आरादञ्जलिपेयमत्र विकसन्मन्दारपुष्पोत्थितं
सौरभ्यं पवनोपनीतममितो धावन्त्यमी षट्पदाः ।
तन्त्रीमण्डलमार्द्रयन्ति कणिका मन्दाकिनीपाथसामप्यन्तःकरणं च मे सुमहतीमालम्बते निर्वृतिम् ॥ ८ ॥

(सरभसावतरणं नाटयित्वा । अधोऽवलोक्य ।) अये, मध्यमलोकस्य नेदीयांसं प्रदेशमनुप्राप्तोऽस्मि । यतः ।

उद्यद्भिः शिखरैरमी कतिचन व्यज्यन्त एवाचला
वैमल्यादनुमीयते च सरितां स्रोतस्विनी संततिः ।
सूच्यन्ते परिमण्डलेन तरवो नीलाम्बुदश्रीमुषो
मन्दं मन्दमुपैति लोचनपथग्राह्यां दशां मेदिनी ॥ ९ ॥

(पुनर्विलोक्य साश्चर्यम् ।)

गिरिवरतटिनीगुल्मैर्दर्शनपदवीं क्रमादुपारूढैः ।
अवरोहति मयि रभसाद्भूरियमारोहतीव गगनतलम् ॥ १० ॥

मुहूर्तमात्रादवतीर्णोऽस्मि हिमवदुपकण्ठभूमिम् । (किंचिदन्तरमवतीर्यावलोक्य च ।) अयं हि शैलराजः

उत्सारयन्निव विभाति नभोवकाशं
शृङ्गैर्विहारभवनैरिव तुङ्गतायाः ।

आभोगवद्भिरमृतांशुकरावदातै-
राक्रामतीव कटकैर्हरिदन्तराणि ॥ ११ ॥

अतिरिच्यते खल्वयमसाधारणेन भुवनधुरंधरेण भूम्ना मन्दरगन्धमादनप्रभृतिभ्यो महामहीधरेभ्यः । यतः ।

त्रिभुवनगुरुणा गुणातिरागा-
त्कमलभुवाकलिताधिपत्यलक्ष्मीः ।
अविरतमनुशास्ति देवतात्मा
सकलमिदं कुलशैलचक्रवालम् ॥ १२ ॥

तदहमधुना किन्नरीगीतनिष्पन्दकृष्णसारेण चमरीजालबालविक्षेपविरचितालीकचन्द्रोदयविलासेन कस्तूरीपरिमलोपहतगगनागमनखेदेन शैलेयगन्धिना कटकवर्त्मना प्रस्तुतवस्तुसाधनाय प्रविशामि यावदोषधिप्रस्थम् । (तथा कृत्वा पुरोऽवलोक्य ।) इदं तदोषधिप्रस्थं

विपुलकनकशृङ्गोपान्तविश्रान्तमेघं
सुरतरुवरवाटीशोभमानोपकण्ठम् ।
मणिभवनमहोभिः सृज्यमानेन्द्रचापं
मदयति मम चेतो मन्दिरं विस्मयानाम् ॥ १३ ॥

(पुरप्रवेशमभिनीयाग्रतो दृष्टिं दत्त्वा ।) इदमभ्रंलिहगोपुरशिखरावलीढनक्षत्रपथं हैमवतमायतनम् । (प्रवेशं नाटयन् । आकाशे ।) भोः कञ्चुकिन्, कुत्र वर्तते कुलाचलचक्रवर्ती । किं ब्रवीषि—'देव्या मेनया सार्धं किमपि मन्त्रयन्नभ्यन्तरे मण्डपमधिवसति' इति । तर्हि साधीयानवसरः कार्यनिवेदनस्य । (इति परिक्रामति ।)

(ततः प्रविशति हिमवान्मेनापरिवृतः परिजनश्च ।)

हिमवान्—देवि, कन्यापितृत्वं खलु गृहमेधिनामधिकतरं दुःखमावहति । अस्मत्कुलालंकरणमियं च गौरी परिणययोग्यां दशां प्रतिपद्यते । तथा हि ।

आभोगशालिकुचकुड्मलमायताक्ष्या
वक्षोऽवकाशमभिवाञ्छति संनिरोद्धुम् ।

अप्यस्ति नास्ति वचसा विषयेऽवलग्ने
तन्वी समुल्लसति काचन रोमरेषा ॥ १४ ॥

मेना—जह[1] अज्जउत्तो आणवेदि तहा विवाहमङ्गलजोग्गा संवृत्ता ।

हिमवान्—देवि, अन्यदपि श्रूयताम् ।
कुचयुगुलं परिणद्धं यथा यथा वृद्धिमेति तन्वङ्ग्याः ।
वरचिन्ताहृतमनसस्तथा तथा कार्श्यमेति मे गात्रम् ॥ १५ ॥

मेना—मह[2] वि रत्तिंदिअं भाइदे अस्सिं ज्जेव अत्थे णिहिअहिअआए किं लक्खीअदि ।

हिमवान्—(पुरोऽवलोक्य ।) देवि, वीणाविहारी मुनिरित एवाभिवर्तते । तदर्घ्यमानीयताम् ।

मेना—जह[3] आणवेदि अज्जउत्तो ।

हिमवान्—(उत्थाय साञ्जलिबन्धम् ।) भगवन्, अभिवादये ।

नारदः—अभ्युदयपरम्परावाप्तिरस्तु ।

(हिमवानासनमुपनीयार्घ्यं समर्पयति ।)

(नारदः प्रतिगृह्णाति ।)

हिमवान्—(सहर्षमञ्जलिं बद्ध्वा ।)
स्वायत्तसिद्धाखिलकामनानां तत्त्वे परस्मिन्परिनिष्ठितानाम् ।
भवादृशामागमनोत्सवोऽयं न लभ्यते नूनमहोऽल्पपुण्यैः ॥ १६ ॥

नारदः—निःस्पृहैरपि मादृशैस्त्वादृशाः सर्वाश्रमोपकारिणो गृहमेधिनः पुरुषा द्रष्टव्या एव ।

हिमवान्—यदभिहितं भवता तदनुग्राह्येषु ।

नारदः—किमनुग्राहकस्यानुग्राह्यतायां वितर्कः । किं च तीर्थरूपो भवानस्माभिरभिगन्तव्य एव । यतः ।

---

१. यथार्यपुत्र आज्ञापयति तथा विवाहमङ्गलयोग्या संवृत्ता ।

२. ममापि रात्रिंदिवं भाविते॒ऽस्मिन्नेवार्थे निहितहृदयायाः किं लक्ष्यते ।

३. यथाज्ञापयत्यार्यपुत्रः ।

शिरसि निपतिता पुरा पुरारेरथ शिखरे तव यत्ततोऽवतीर्णा ।
अमरसरिदशेषलोकमान्या त्रिभुवनपावनतामुपैति तेन ॥ १७ ॥

हिमवान्—किमेवमतिभूमिमारोप्यते निदेशवर्ती परिजनः ।

नारदः—

अप्रतिमरूपलक्ष्ये गङ्गा गौरी च कन्यके भवतः ।

हिमवान्—एवमेतत् ।

नारदः—

पूर्वा तयोः पुरस्तादनुरूपं रमणमम्बुधिं प्राप्ता ॥ १८ ॥

हिमवान्—अस्त्येतत् ।

नारदः—द्वितीयायास्तु ते दुहितुः को नाम वरोऽभिप्रेतस्तत्रभवता ।

हिमवान्—भगवन्, इममेवार्थं विचिन्तयतो मे मनसि महाननुपतापः ।

नारदः—

न नागलोके न मनुष्यलोके न देवलोकेऽपि समो वरोऽस्याः ।
एषां प्रभुर्यस्तनयां त्वदीयां स एव देवः परिणेतुमीष्टे ॥ १९ ॥

हिमवान्—तमपि भगवानेव निवेदितुं प्रगल्भते ।

नारदः—(आत्मगतम् ।) अस्येदानीं सामान्यवचनैरेव चन्द्रचूडामणिर्निगूहितव्यः । (प्रकाशम् ।) मया किल प्रणिधानचक्षुषा दृष्टोऽयमर्थः । यथा विश्वाधिकं कमपि वरमियं ते दुहिता प्रपत्स्यते । न पुनरिममिति विशेषेण ।

हिमवान्—विश्वाधिक इत्येतावता कृतार्थोऽस्मि ।

नारदः—

पुण्येन केनापि किलावतीर्णा पुरातनी शक्तिरियं सुता ते ।
इमामसाधारणरूपलक्ष्मीं न लोकसामान्यसुतां प्रतीयाः ॥२०॥

ततश्च भवता दुहितेयं न यस्मै कस्मैचित्प्रदित्सितव्या ।

**हिमवान्**—नाहं भवदाज्ञां लङ्घयामि ।

**नारदः**—अभ्युदयस्य निमित्तमन्यदपि किंचिदुपदिश्यते । यथा-

अष्टाभिरेव तनुभिर्भुवनं दधान-
स्तेजस्त्रयेण महता विहितेक्षणश्रीः ।
अन्येषु सत्स्वपि य ईश्वरशब्दवाच्यः
सोऽयं तपस्यति तटे तव चन्द्रमौलिः ॥ २१ ॥

**हिमवान्**—अस्त्येतत् ।

**नारदः**—ततो भवानन्तिकमागतमिन्दुशेखरं सपर्यया कयाचिदुपतिष्ठताम् ।

**हिमवान्**—भगवन्, अभिधेहि का वा सपर्या ।

**नारदः**—अनुरूपसखीजनपरिवृतां दुहितरमिमां गौरीं समित्कुशदूर्वाद्युपहरन्तीं परिचर चन्द्रशेखरमिति प्रेषयतु भवान् ।

**हिमवान्**—तथा करिष्यामि ।

**नारदः**—(आत्मगतम् ।) उपक्षिप्तं बीजम् । कर्तव्यं च सामान्यवृत्त्या निवेदितम् । तद्यथागतं गमिष्यामि । (प्रकाशम् ।) हिमवान्, यदुक्तमस्माभिस्तदनुष्ठीयताम् । (इत्याकाशमार्गेण निष्क्रान्तः ।)

**हिमवान्**—(विलोक्य ।)

दिवापि देहप्रभया दर्शयन्दिक्षु चन्द्रिकाम् ।
द्वितीय इव चन्द्रोऽयमारोहति दिवं मुनिः ॥ २२ ॥

(मेनां प्रति ।) देवि, श्रुतं खलु त्वया महामुनेर्वचनम् ।

**मेना**—सुदं मए विस्साहिओ पुरिसो णाहो त्ति[1] ।

**हिमवान्**—(स्वगतम् ।) विश्वाधिकशब्दोपक्षेपेण कर्तव्योपदेशेन च दुहितुरस्याश्चन्द्रशेखर एव वर इति सूचितम् । (प्रकाशम् ।) देवि, नारदोपदिष्टामिन्दुमौलिसपर्यां विरचयितुं दुहितरं नियोक्तुमुद्युञ्जामहे ।

(इति निष्क्रान्ताः सर्वे ।)

इति प्रथमोऽङ्कः ।

---

१ श्रुतं मया विश्वाधिकः पुरुषो नाथ इति ।

# द्वितीयोऽङ्कः ।

(ततः प्रविशति वनदेवता वासन्तिका ।)

वासन्तिका—[1]आणत्तम्हि णन्दीस्सरेण जहा वासन्दिए, णिअमट्ठिदस्स णीलल्लोहिदस्स पूआपुप्फाइं णन्दणवणादो आणेहित्ति । ता जहा आदिट्ठं णन्दीस्सरेण तहा आआसमग्गेण गदुअ सोरहवासिददिसामुहाइं कप्पद्दुमकुसुमाइं णन्दणवणादो अवचेदुं गमिस्सम् । (इति तथा करोति ।)

(ततः प्रविशति रम्भा ।)

रम्भा—[2]तारआसुरवन्दिग्गहणसज्झसपरिसङ्किदो अच्छराजणो महामेरुगुहाणिलीणो आसि । अहं उण कुबेरणन्दणं णलकूवरं खणं विहाय जीविदं धारेदुं ण पारेमि । तदो तं एव्व अहिसरामि । (इत्यवतरति ।)

वासन्तिका—(रम्भां दृष्ट्वा ।) [3]अए, पिअसही रम्भा आअच्छइ । ता उपसप्पामि णं । (इति तथा करोति ।)

रम्भा—[4]अए, हिमवक्कडअणिवासिणी वणदेवदा वासन्दिआ । भद्दं पिअसहीए ।

---

१ आज्ञप्तास्मि नन्दीश्वरेण यथा वासन्तिके, नियमस्थितस्य नीललोहितस्य पूजापुष्पाणि नन्दनवनादानयेति । तद्यथादिष्टं नन्दीश्वरेण तथाकाशमार्गेण गत्वा सौरभवासितदिशामुखानि कल्पद्रुमकुसुमानि नन्दनवनादवचेतुं गमिष्यामि ।

२. तारकासुरवन्दिग्रहणसाध्वसपरिशङ्कितोऽप्सरोजनो महामेरुगुहानिलीन आसीत् । अहं पुनः कुबेरनन्दनं नलकूवरं क्षणं विहाय जीवितं धारयितुं न पारयामि । ततस्तमेवाभिसरामि ।

३. अये, प्रियसखी रम्भागच्छति । तदुपसर्पाम्येनाम् ।

४. अये, हिमवत्कटकनिवासिनी वनदेवता वासन्तिका । भद्रं प्रियसख्याः ।

वासन्तिका—[1]पिअसहि, किं एत्थ आअदे ।

रम्भा—[2]तारआसुरवन्दिग्गहसज्झससङ्किदो अच्छराणो महामेरुगुहाणिलीणो वट्टइ ।

वासन्तिका—[3]सच्चं सो तारिसो दुट्ठसीलो ।

रम्भा—[4]कुबेरणन्दणं खणं अदिट्ठिअ ण सक्कुणोमि जीविदं धारेदुं त्ति पिअसही सुट्ठुदरं जाणादि ।

वासन्तिका—[5]पढमं जाणामि प्पसिद्धो क्खु तुह्माणं अण्णोण्णाणुराओ ।

रम्भा—[6]तदो अहं आसण्णा एत्थ मअणकोअण्डणिरन्दरणिस्सरन्तसरणिअरजज्जरिदहिअआ अहिसरामि वञ्चिअ सहीजणाणं णलकूवरम् ।

वासन्तिका—[7]जुज्जइ तारिसस्स अणुराअस्स ईरिसो व्वावारो ।

रम्भा—[8]तुमं उण कहिं गच्छसि ।

वासन्तिका—[9]णिच्चाणन्दणिजस्सरूवस्स लोअणमेत्तवाडवस्स

---

१. प्रियसखि, किमत्रागतम् ।

२. तारकासुरवन्दिग्रहसाध्वसशङ्कितोऽप्सरोजनो महामेरुगुहानिलीनो वर्तते ।

३. सत्यं स तादृशो दुष्टशीलः ।

४. कुबेरनन्दनं क्षणमदृष्ट्वा न शक्नोमि जीवितं धारयितुमिति प्रियसखी सुष्ठुतरं जानाति ।

५. प्रथमं जानामि प्रसिद्धः खलु युवयोरन्योन्यानुरागः ।

६. ततोऽहमासन्नात्र मदनकोदण्डनिरन्तरनिःसरच्छरनिकरजर्जरितहृदयाभिसरामि वञ्चयित्वा सखीजनान्नलकूवरम् ।

७. युज्यते तादृशस्यानुरागस्येदृशो व्यापारः ।

८. त्वं पुनः कुत्र गच्छसि ।

९. नित्यानन्दनिजस्वरूपस्य लोचनमात्रवाडवस्य भगवतो नीललोहितस्य पूजापुष्पाणि नन्दनवनादानेतुमाज्ञप्तास्मि नन्दीश्वरेण ।

भअवदस्स णीललोहिदस्स पूआपुप्फाइं णन्दणवणादो आणेदुं आ-णत्तह्मि णन्दीस्सरेण ।

रम्भा—पिअसहि,[1] अत्थि अहिणवो तत्थ वुत्तन्तो ।

वासन्तिका—अण्णो[2] कोवि णत्थि । पिदुणो णिदेसेण सवरि-जणा पव्वई दिअसे दिअसे आगदुअ महादेवं आराधेइ ।

रम्भा—किं[3] आराधणस्स फलम् ।

वासन्तिका—परमेस्सरप्पसादो[4] ।

रम्भा—जुज्जइ[5] । गच्छ तुमं पत्थुदं कज्जं कादुम् । अहं वि जहासंकप्पिदं कादं गमिस्सम् ।

(इति निष्क्रान्ते ।)

विष्कम्भकः ।

(ततः प्रविशति विविक्तस्थानमधिवसन्महेन्द्रः ।)

महेन्द्रः—(मण्डपद्वारं विलोक्य ।) कः कोऽत्र भोः ।

देवनन्दी—(प्रविश्य ।) स्वामिन्, अयमस्मि ।

महेन्द्रः—महत्कार्यं विचारणीयमस्ति । अतो बृहस्पतिमन्तरेण नान्यः प्रवेशनीयः ।

देवनन्दी—तथा । (इति निष्क्रान्तः ।)

(ततः प्रविशति बृहस्पतिः ।)

बृहस्पतिः—(पुरोऽवलोक्य ।) अयमिह महेन्द्रो विविक्तस्थान-मण्डपे वर्तते । एष खलु

---

१. प्रियसखि, अस्त्यभिनवस्तत्र वृत्तान्तः ।

२. अन्यः कोऽपि नास्ति । पितुर्निदेशेन सपरिजना पार्वती दिवसे दि-वस आगत्य महादेवमाराधयति ।

३. किमाराधनस्य फलम् ।

४. परमेश्वरप्रसादः ।

५. युज्यते । गच्छ त्वं प्रस्तुतं कार्यं कर्तुम् । अहमपि यथासंकल्पितं कर्तुं गमिष्यामि ।

कैश्चिन्नेत्रैर्दलितदनुजं वज्रमालोकमानः
कैश्चित्पश्यन्नमरसुदृशां सस्मितान्याननानि ।
कैश्चित्सेवाविहितमनसामञ्जलिं वीक्षमाण-
श्चित्ते चिन्तापर इव पुरोदर्शनो वासवो मे ॥ १ ॥

तदेनमुपसरामि । (इति तथा करोति ।)

महेन्द्रः—(बृहस्पतिं दृष्ट्वा ।) इहोपविश्यताम् ।

बृहस्पतिः—तथा (इति भद्रासनान्तिकमुपविशति ।)

देवनन्दी—(प्रविश्य) स्वामिन्, देवदूतो देवलो विज्ञापयति विज्ञाप्यं मे किंचिदस्तीति ।

महेन्द्रः—तर्हि तमेकं प्रवेशय ।

( ततः प्रविशति देवदूतः । )

देवदूतः—अयं हि स्वामी बृहस्पतिना किमपि मन्त्रयन्वर्तते । तदेनमुपसर्पामि । (इत्युपसृत्य ।) जयतु जयतु स्वामी ।

महेन्द्रः—देवल, किमुद्विग्न इव विलोक्यसे ।

देवदूतः—अतिभूमिं गमितामसुरपीडां कथं स्वामिने विज्ञापयामि ।

महेन्द्रः—मा भैषीः । कथय तेषामुद्यमम् ।

देवदूतः—कथयामि । श्रूयताम् ।

उद्धृत्यामरदीर्घिकाजलभुवामम्भोरुहाणां ततिं
स्वैरं नन्दनपादपानभिमतानामूलमुन्मूल्य नः ।
हृत्वा वाञ्छितवस्तुदानचतुरां तामर्जुनीं दुर्जनाः

( इत्यर्धोक्ते विरमति । )

महेन्द्रः—अवशिष्टं च कथ्यताम् ।

देवदूतः—

स्वर्गस्त्रैणकचग्रहं रचयितुं निःशङ्कमुद्युञ्जते ॥ २ ॥

महेन्द्रः—देवल, कुलिशसहाये मद्बाहौ जाग्रति किमेवमतिशङ्का क्रियते । यथा ।

वृत्रं बलं च नमुचिं च कथावशेषं
कृत्वा विधाय किल पर्वतपक्षभेदम् ।
त्रैलोक्यरक्षणपटोर्मम तारकेऽस्मि-
न्वेधो वरः किमु महानयमन्तरायः ॥ ३ ॥

तत्कतिपयैरेव दिवसैस्तत्प्रतिक्रिया भविष्यति । गच्छ त्वं समुचितनियोगकरणाय ।

देवदूतः—तथा । (इति निष्क्रान्तः ।)

महेन्द्रः—गुरो, किमतः परं विधातव्यम् । यथा पूर्वेद्युरेव तारकदनुजाक्रान्तिमसहमानैरस्माभिरमरपरिषदा सार्धं भगवानुपस्थितः पद्मयोनिराचष्ट । यथा सेनान्यमन्तरेण नान्येन तारको निहन्तव्यः । तदुत्पादने चायमभ्युपायः ।

हैमवते कटकतटे शशाङ्कचूडामणिस्तपस्तनुते ।
यत्नेन येन केनचिदस्तु प्रणयी स पार्वत्याम् ॥ ४ ॥

ततस्तयोरात्मसंभवेन सेनान्या कुमारेण वो मनोरथसिद्धिर्भविष्यति ।

महेन्द्रः—तत्कथं गिरिजा गिरिशेन परिग्राह्यते । कदा वा तदुत्पन्नः कुमारः पूरयिष्यति नो मनोरथान् ।

बृहस्पतिः—न हीश्वराणां व्याहृतयो व्यभिचरन्ति ।

महेन्द्रः—(सस्मरणं सहर्षं च ।) विरिञ्च्यसमादिष्टमस्मत्कार्यमप्यङ्गीकुर्वतीव पितुर्निदेशेन सपरिजना पार्वती दिवसे दिवसे समागत्य भगवन्तमिन्दुशेखरं परिचरतीति रम्भामुखादश्रौषम् ।

बृहस्पतिः—यद्येवं सिद्धं नः समीहितम् ।

महेन्द्रः—किमेतावता ।

मुग्धैरप्सरसां विलाससहितैर्वाक्यैर्मनोहारिभिः
कर्णान्तस्खलितैरपाङ्गवलितैरारेचितभ्रूलतैः ।
बाहोः स्रस्तकुचोत्तरीयघटनामञ्जुक्वणत्कङ्कणै-
र्व्यापारैरपि यो विकारपदवीं न प्रापितः संयमी ॥ ५ ॥

तस्य पुनरचिन्तनीयमधिकानन्दसुन्दरमनादिनिधनमनञ्जनमगुणक्रियमात्मानमवाह्येन चक्षुषा साक्षात्कुर्वतः समुपसंहृताखिलद्वैतकल्पनाविकल्पस्य स्वतन्त्रकर्तुश्चराचरगुरोर्भगवतश्चन्द्रमौलेः कियद्वशीकरणं गौरीपरिचरणम् ।

बृहस्पतिः—भगवन्, अन्ययुवतिसामान्यामेव तां न मन्येथाः । यतः ।

आसेचनकतनुश्रीरन्तःकरणस्य किमपि संवननम् ।
सा खलु गिरिराजसुता संमोहनमस्त्रमेव पुष्पेषोः ॥ ६ ॥

महेन्द्रः—(सहर्षम् ।) पुष्पेषोरित्युपोद्घातेन स्मारितोऽस्मि स एव तयोर्गिरिजागिरिशयोर्घटने पटीयानिति ।

बृहस्पतिः—(सहर्षम् ।)

त्रैलोक्यशासने दक्षा तावकी मतिरूर्जिता ।
शान्तिकं पौष्टिकं कर्तुं शक्ता नः केवलं मतिः ॥ ७ ॥

यतो मदीयापि बुद्धिरिमां वितर्कपदवीं नावतीर्णा । तदविलम्बितमेव समाहूयतां कामः ।

महेन्द्रः—(मण्डपद्वारं विलोक्य ।) कः कोऽत्र भोः ।

(प्रविश्य ।)

देवनन्दी—स्वामिन्, अयमस्मि ।

महेन्द्रः—देवनन्दिन्, आहूयतां झटिति कामः ।

देवनन्दी—यथा । (इति निष्क्रान्तः ।)

(ततः प्रविशति रतिवसन्ताभ्यां कामः ।)

कामः—(उपसृत्य ।) सर्वे स्थास्यामः । (इत्युपसर्पति ।)

महेन्द्रः—(विलोक्य सहर्षम् ।)

मुखरमधुपमालाचारुमौर्वीसनाथं
त्रिभुवनजययोग्यं चापमंसे दधानः ।
मुखमुदितविलासं वीक्ष्यमाणः प्रियायाः
सहमधुरिह मन्दं मन्दमायाति कामः ॥ ८ ॥

(कामो रतिवसन्ताभ्यां सार्धमुपसर्पति । चापगर्भेणाञ्जलिना सविलासं प्रणमति ।)

महेन्द्रः—(आसनान्तिकं हस्तेन निर्दिशन् ।) सखे काम, इहोपविश्यताम् ।

(कामो रतिवसन्ताभ्यां सार्धमुपविशति ।)

बृहस्पतिः—अये, माननीयं भवन्तं स्थाने खलु मानयति महेन्द्रः ।

कामः—(अञ्जलिं बद्ध्वा ।)

त्रैलोक्यनाथस्य तवातिशक्तेः किमस्ति कार्यं मघवन्मयापि ।
प्रकाशिताशेषदिशावकाशो दिवाकरो दीपमपेक्षते किम् ॥ ९ ॥

बृहस्पतिः—मा भवानेवमाचष्ट ।

असावलोकसामन्यचापविद्याधुरंधरः ।
करोतु कार्यं सकलं बाहुस्तव दिवौकसाम् ॥ १० ॥

महेन्द्रः—सखे काम,

चक्रेण विष्णोरपि यद्दुरापं तरस्विना वा शतकोटिना मे ।
तत्साधयेत्पुष्पमयं तदस्त्रमहो भवानद्भुतबाहुवीर्यः ॥ ११ ॥

कामः—(सगर्वम् ।) स्वामिन्, यस्ते सापत्नमाचरति ।

दनुजो वा मनुजो वा मुनिरपि वा मुग्धचन्द्रचूडो वा ।
सुरलोकसुन्दरीणां स भवतु बद्धः कटाक्षशृङ्खलया ॥ १२ ॥

(महेन्द्रो बृहस्पतेर्मुखमवलोकयति ।)

बृहस्पतिः—अये काम, यस्त्वया चरमोऽर्थः परिगणितश्चन्द्रचूडो वेति स इदानीं शंकरः शैलराजकटकसीम्नि निरतिशयशीतलान्तःकरणस्तपश्चरति ।

कामः—ततस्ततः ।

बृहस्पतिः—तमिदानीं पितुर्निदेशेन सपरिजना पार्वती सौभाग्यमयीव सालभञ्जिका सौन्दर्यदेवतेव विग्रहिणी परिचरति ।

कामः—ततस्ततः ।

बृहस्पतिः—तयोश्च मेलने दिविषदां महती कार्यसिद्धिः । सा च भवन्तमेव कटाक्षयति ।

कामः—(आत्मगतम् ।) अनात्मज्ञता हि पुंसामात्मनिधनमापादयति, यदहमात्मप्रशंसापरवशः परमेश्वरमपि सामान्यवृत्त्या पर्यजीगणम् ।

वसन्तः—(आत्मगतम् ।) अन्यदुपक्रान्तमन्यदेवापतितम् ।

काय्यं सुगन्धिविशिखः स्वदमानचापः
स्त्रीणां वशीकरणकर्मणि जागरूकः ।
क्वासौ ललाटनयनानलविस्फुलिङ्ग-
वार्तावशेषितपुरत्रितयो महेशः ॥ १३ ॥

रतिः—अह्मो, अच्चाहिदं आपडिदं जं खण्डपरसू जेदव्वो ।[1]

कामः—यत्पुनः परिजनपरमाणोर्मत्तोऽपि मखभुजः कार्यमिच्छन्ति तदात्मव्ययेनापि कर्म कर्तुमुपयुज्यते ।

महेन्द्रः—

संमोहने तव शरे संहितमात्रे गिरीन्द्रकन्यायाः ।
मुखमतिमुदितविलासं विलोकयति मुग्धधृतिरीशः ॥ १४ ॥

तदीषत्करेऽस्मिन्कार्ये भवता न किंचिदपि शङ्कनीयम् ।

कामः—

त्यजन्यास्यामि कार्याय प्राणान्प्रियतमानपि ।
यशःशरीरममलं लभन्ते ह्यनुषङ्गिणः ॥ १५ ॥

तद्यथादिष्टं स्वामिना तथा करिष्यामि ।

महेन्द्रो बृहस्पतिश्च—(हस्तमुद्यम्य ।)

अस्तु स्वस्त्ययनं तवाद्य मरुतां सत्याशिषामाशिष-
स्त्वां रक्षन्तु यशश्च तेऽस्तु विपुलं लोकत्रये दीव्यतु ।

---

१. अहो अत्याहितमापतितं यत्खण्डपरशुर्जेतव्यः ।

शौर्यं त्वद्भुजयोरिदं च भवतात्पुङ्खानुपुङ्खोदयं
किंचोद्योगमिमं समर्थयतु नः स्वच्छन्दचेष्टाविधिः ॥१६॥

(कामो रतिवसन्ताभ्यां सह शङ्कमानो निष्क्रान्तः ।)

महेन्द्रः—गुरोः विरिञ्चयादेशादनुरूपमस्माभिरेव तावदनुष्ठितम् । कार्यसिद्धौ भगवती नियतिरेव प्रभवति ।

बृहस्पतिः—अहमपि प्रस्तुतकार्यसिद्धये कुलदेवताः प्रार्थयितुं गमिष्यामि ।

(इति निष्क्रान्ताः सर्वे ।)

इति द्वितीयोऽङ्कः ।



## तृतीयोऽङ्कः ।

(ततः प्रविशति महेन्द्रो बृहस्पतिश्च ।)

महेन्द्रः—गुरो किं नाम कामः केनापि बाणसंधानेन खण्डपरशुं वशीकुर्यात् । आहोस्वित्संवर्तसमयदिनकरदुष्प्रेक्ष्यं मुनिमीक्षितुमशक्नुवन्निवर्तेत । अथवा कोपान्धकारिचेतसासानं भालनयनपावकस्य पुरोडाशतां नीयेत । कथं भविष्यतीति न जाने ! (वामाक्षिस्पन्दनं सूचयित्वा साशङ्कम् ।)

अदक्षिणमिदं चक्षुः स्फुरितैः शंसतीव मे ।
देवकार्यविघाताय जाग्रतो वामतां विधेः ॥ १ ॥

बृहस्पतिः—प्रतिहतममङ्गलम् । भगवन्, अनेन निमित्तेन ज्ञाप्यते वृत्तान्तज्ञेन केनचिदागन्तव्यमिति ।

(ततः प्रविशति नारदः ।)

नारदः—मघवदादेशेन स्थाण्वाश्रमं गत्वा तत्रत्यमुदन्तं विज्ञाय समागतोऽस्मि । तदेनमुपसृत्य निवेदयिष्यामि तत्रत्यमखिलमुदन्तम् । (इति परिक्रामति ।)

महेन्द्रः—(अञ्जलिं बद्ध्वा विलोक्य ।) अयमेव महतीवल्लभो मुनिरुपसर्पति । तदासनमुपनीयताम् ।

(बृहस्पतिरासनमुपनयति ।)

(नारद उपविशति ।)

महेन्द्रः—(अञ्जलिं बद्ध्वा ।) भगवन्, कथय भद्रमभद्रं वा दिविषदामभिलषितम् ।

नारदः—सर्वमादितः प्रभृति कथयामि । श्रूयताम् ।

महेन्द्रः—अवहितोऽस्मि ।

नारदः—तथा देवकार्याय प्रस्थितं कंदर्पं तिरस्करिण्या विद्यया तत्रत्यवृत्तान्तजिज्ञासयाहं त्वन्निदेशादन्वचरम् ।

महेन्द्रः—ततस्ततः ।

नारदः—तत्र स्थाण्वाश्रमसमीपमासाद्य कामो वसन्तमभिहितवान् ।

महेन्द्रः—कथमिति ।

नारदः—सखे, त्वयास्मिन्हिमवदुपकण्ठकानने विजृम्भितव्यमिति ।

महेन्द्रः—स किं कृतवान् ।

नारदः—

वाचालयन्नथ कुलानि वनप्रियाणा-
मङ्कूरयन्मलयमारुतकन्दलानि ।
सख्युः प्रसूनविशिखस्य भुजावलेपं
संवर्धयन्मधुरजृम्भत काननेषु ॥ २ ॥

महेन्द्रः—ततस्ततः ।

नारदः—

दत्तं प्रियाभिर्बहुमानपूर्वमासाद्य चूतासवमन्यपुष्टाः ।
आमोदिभिः पञ्चमरागभेदैः प्राबोधयन्पञ्चशरावलेपम् ॥ ३ ॥

महेन्द्रः—ततस्ततः ।

नारदः—

आधूय चन्दनतरूनुत्तमनद्यास्तरङ्गमालिङ्ग्य ।
आदाय कमलसौरभमङ्कुरितो मलयशैलपवमानः ॥ ४ ॥

महेन्द्रः—ततस्ततः ।

नारदः—

आदाय चापमधिरोपितषट्पदज्यं
तस्मिन्हिमाचलमुपेयुषि पञ्चबाणे ।
वेलातिलङ्घि किमपि प्रणयातिरेका-
द्द्वन्द्वानि लौल्यमभजन्त विमोहितानि ॥ ५ ॥

महेन्द्रः—ततस्ततः ।

नारदः—

चूताः कोरकिता विनापि सुदृशां हस्ताम्बुजामर्शना-
त्तत्पादाम्बुजताडनैरपि विना कङ्केलयः पुष्पिताः ।
तत्संगीतकमन्तरेण हसिता रम्याः प्रियालद्रुमा
मुक्त्वा तद्वदनासवं मुकुलिता गन्धोत्तराः केसराः ॥ ६ ॥

महेन्द्रः—ततस्ततः ।

नारदः—किं वहुना ।

तस्मिन्वने निवसतामनुतटमुल्लङ्घ्य धैर्यमर्यादाम् ।
अवलासु निर्ममानामासीदतिरागसिन्धुरुद्वेलः ॥ ७ ॥

महेन्द्रः—एवं सकलजनविकारकारिणि तस्मिन्प्रवृत्ते किं कृतवान्कामः ।

नारदः—स कामो रत्या वसन्तेन चान्वीयमानो महति देवदारुखण्डमण्डपे तरक्षुचर्मनिर्मितायामहिमशिलावेदिकायामासीनमन्तर्मुखनिहितचित्तवृत्तिमभ्यन्तरपवननिरोधनिश्चलाननं नासाग्रनिहितपक्ष्माण्यक्षीणि धारयन्तमपरमिव निस्तरङ्गमम्बुधिं तमिन्दुशेखरमपश्यत् ।

महेन्द्रः—ततस्ततः ।

नारदः—ततो भगवानपि नीललोहितः प्रतीचावलोकनेन प्रत्यञ्चमात्मानमपरोक्षीकृत्य शिथिलितपर्यङ्कवन्धः प्रणिधानाद्व्यरंसीत् ।

महेन्द्रः—ततस्ततः ।

नारदः—स कामस्तद्दर्शनेन करतलविधृतकार्मुकः कर्तव्यमपरमजानन्क्षणमालिखित इव भयादतिष्ठत् ।

महेन्द्रः—ततस्ततः ।

नारदः—

अत्रान्तरे हरमुपासितुमभ्ययासी-
द्वासन्तिकप्रसवकल्पितमण्डनश्रीः ।

शृङ्गारवीरतपसामधिदेवतेव
साकं सखीभिरवनीधरराजकन्या ॥ ८ ॥

महेन्द्रः—ततस्ततः ।

नारदः—ततः स कामो लब्धालम्ब इव समाश्वस्य दृष्टिप्रतीपविहारेण पाश्चात्त्यभागमाश्रित्य समयं प्रतीक्ष्य स्थितवान् ।

महेन्द्रः—ततस्ततः ।

नारदः—पार्वती च सुखोपविष्टमष्टमूर्तिमष्टाङ्गस्पृष्टभूमिरवन्दिष्ट ।

महेन्द्रः—ततस्ततः ।

नारदः—अनुरूपरमणमासादयेति तामाशिषावर्धयदर्धचन्द्रमौलिः ।

महेन्द्रः—ततस्ततः ।

नारदः—ततः क्षणे तस्मिन्नयमेवावसर इति स कामः कार्मुके समाधत्त संमोहनं बाणम् ।

महेन्द्रः—ततस्ततः ।

नारदः—

तदनु युगपदीशः पार्वतीवक्त्रपद्मे
स्मितविकसितगण्डे प्राहिणोल्लोचनानि ।

महेन्द्रः—ततस्ततः ।

नारदः—

पुलकिततनुरन्तर्भावमावेदयन्ती
दरमुदितमुखेन्दुः सा च सव्रीडमस्थात् ॥ ९ ॥

महेन्द्रः—ततस्ततः ।

नारदः—ततो भगवानन्तःकरणविक्रियां तपोबलेन संयम्य तत्कारणाय विष्वग्विलोचनानि व्यापारितवान् ।

महेन्द्रः—ततस्ततः ।

नारदः—

आरादपश्यदधिसंहितमोहनास्त्रं
　　कर्णावतंसपदकल्पितकार्मुकज्यम् ।
आकुञ्चितैकपदमञ्चितपूर्वकायं
　　लक्ष्यीकृतात्मवपुषं मदनं महेशः ॥ १० ॥

महेन्द्रः—(सभयम् ।) अवशिष्टं च कथ्यताम् ।

नारदः—तदनु प्रकुपितस्य शूलिनो भाललोचनादुदजृम्भज्ज्वालावलीजटालो ग्रासलालस इव कालानलो वह्निः ।

महेन्द्रः—(सनिर्वेदम् ।) किमतः परं निवेद्यते ।

नारदः—तेन पुरारेर्नयनानलेन मदनः पुरोडाशतां नीतः ।

(महेन्द्रो मूर्च्छति ।)
(नारदः समाश्वासयति ।)

महेन्द्रः—(आश्वस्य ।) हा भुवनरमणीय पुष्पबाण सकलजनानन्दन, पुरंदरस्यार्थे त्यक्तजीवितोऽसि ।

बृहस्पतिः—भगवन्, मा विषीद । भवितव्यता हि बलवती । तदास्ताम् ।

महेन्द्रः—रतिः किं कृतवती ।

नारदः—रतिरपि मोहं प्राप्ता ।

महेन्द्रः—किं कृतवान्वसन्तः ।

नारदः—मोहं प्राप्तः सखा वसन्तोऽपि ।

महेन्द्रः—मूर्च्छितौ रतिवसन्तौ किमन्वतिष्ठताम् ।

नारदः—प्रथममाश्वास्य तेन मधुना कथंचित्संज्ञां लम्भिता रतिरपि पुनः परुषपवनकीर्यमाणपांसुपटलं भसितमयं पुरुषाकृति पत्युरङ्गमालिङ्ग्य

गुरुतरशोकापहृता कुररीव प्रियवियोगमापन्ना ।
आक्रन्ददार्तनादं बाष्पस्नपितोन्नतस्तनी बाला ॥ ११ ॥

महेन्द्रः—ततस्ततः ।

नारदः—तदनु हा नाथेति बहु विलपन्तीं रतिमाश्वासयदाकाशवाणी । यथा—

मुञ्च शोकमिह कामवल्लभे लङ्घ्यते जगति केन कल्पना ।
उद्भविष्यति पुनश्च ते पतिः पार्वतीपरिणये पिनाकिनः ॥ १२ ॥

इति ।

महेन्द्रः—(समाश्वस्य सहर्षमिव ।)

भग्नो मनोरथो मे पुनरङ्कुरितं किलायमुद्युङ्क्ते ।
दावाग्निलीढशेषस्तरुरिव धाराधरेण संसिक्तः ॥ १३ ॥

बृहस्पतिः—मघवन्, सत्यैव वैहायसी वाणी । सर्वथा कामः पुनरुद्भविष्यति ।

महेन्द्रः—ततस्ततः ।

नारदः—कथंचित्प्रत्याश्वस्ता रतिर्नीता सा समा दुःखेन मधुना निजं भवनम् ।

महेन्द्रः—कामं कथावशेषं कृत्वा कालकण्ठः किमकरोत् ।

नारदः—स्त्रीसंनिकर्षं परिजिहीर्षया सह भूतगणेन भूतपतिरन्तर्धानमकरोत् ।

महेन्द्रः—किं कृतवती पार्वती ।

नारदः—

आगत्य दोर्भ्यामादाय मूर्च्छामुकुलितेक्षणा ।
नीता नितान्तवात्सल्याद्गौरी हिमवता गृहम् ॥ १४ ॥

महेन्द्रः—भगवन्नारद, श्रुतं श्रोतव्यम् । किमतः परं प्रतिपद्यसे ।

नारदः—पुनरिमं वृत्तान्तं सत्यलोकवर्तिने चतुर्मुखाय निवेदयितुं गमिष्यामि । (इति निष्क्रान्तः ।)

(ततः प्रविशति रम्भा ।)

रम्भा—[1]कुबेरभवणादो णिवट्टमाणाए ओसहिप्पत्थणअरे जो मए आकण्णिदो वुत्तन्तो तं सामिणे विण्णवेमि । (इति परिक्रामति ।)

महेन्द्रः—(विलोक्य ।)

संचारिणीव वल्ली विद्युल्लतिकेव चापलान्मुक्ता ।
मोहनकलेव मूर्ता काचिदियं कमलपत्राक्षी ॥ १५ ॥

(निरूप्य ।) रम्भा खल्वियम् ।

रम्भा—(उपसृत्य ।) [2]जेदु जेदु भट्टा ।

महेन्द्रः—रम्भे, कुत आगम्यते भवत्या ।

रम्भा—[3]कुबेरभवणादो ।

महेन्द्रः—किमस्ति तत्रापूर्वो वृत्तान्तः ।

रम्भा—[4]णीललोहिदस्स णिडिलग्गिकालजालेण कहावसेसिदो कामो त्ति सव्वो भणइ । अण्णच्च किं वि ओसहिप्पत्थणअरे ।

महेन्द्रः—किं तदन्यत् ।

रम्भा—[5]मम्महदाहेण भग्गमणोरहा पव्वई परमेस्सरं जेव्व पइं अहिलसन्दी कठिणेहिं तवच्चरणेहिं अत्तणो अहिलासं पूरिदुं इस्सदि त्ति ।

महेन्द्रः—किमुक्तमस्मिन्नर्थे मातापितृभ्याम् ।

रम्भा—[6]मेणआदेवीए एव्वं भणिदम् ।

---

१. कुबेरभवनान्निवर्तमानयौषधिप्रस्थनगरे यो मयाकर्णितो वृत्तान्तस्तं स्वामिने विज्ञापयामि ।

२. जयतु जयतु भर्ता ।

३. कुबेरभवनात् ।

४. नीललोहितस्य निटिलाग्निकालजालेन कथावशेषितः काम इति सर्वो भणति । अन्यच्च किमप्योषधिप्रस्थनगरे ।

५. मन्मथदाहेन भग्नमनोरथा पार्वती परमेश्वरमेव पतिमभिलषन्ती कठिनैस्तपश्चरणैरात्मनोऽभिलाषं पूरयितुमिच्छतीति ।

६. मेनकादेव्या एवं भणितम् ।

महेन्द्रः—किमिति ।

रम्भा—

पॅरुसो तवोविसेसो तुह उण अग्गं सिरीससुउमारम् ।
विवसिदमेदं कहिणं पव्वइ ता दुक्करं त्ति पडिभाइ ॥ १६ ॥

महेन्द्रः—किमुक्तं हिमवता ।

रम्भा—अँत्थि अणुमदं देण ।

महेन्द्रः—रम्भे, साधीयांसमुदन्तमानीतवती । गच्छ त्वं समुचितनियोगकरणाय ।

रम्भा—तॅहा । (इति निष्क्रान्ता ।)

(नेपथ्ये)

वैतालिकाः—

आधूय प्रणयं विवस्वति गते देशान्तरे पद्मिनी
सोढुं तस्य वियोगमक्षमतया म्लायत्सरोजानना ।
संध्यावल्कलिनी द्विरेफपरिषद्रुद्राक्षमालावती
तत्प्राप्तिस्पृहयेव संप्रति तपःसक्ता समालक्ष्यते ॥ १७ ॥

महेन्द्रः—(आकर्ण्य ।) वयमपि संध्यां वन्दितुं साधयामः ।

(इति निष्क्रान्ताः सर्वे ।)

इति तृतीयोऽङ्कः ।

---

१. परुषस्तपोविशेषस्तव पुनरङ्गं शिरीषसुकुमारम् ।
व्यवसितमेतत्कठिनं पार्वति तद्दुष्करमिति प्रतिभाति ॥

२. अस्त्यनुमतं तेन ।

३. तथा ।

# चतुर्थोऽङ्कः ।

(ततः प्रविशति गृहीतमुनिविग्रहो नन्दी ।)

नन्दी—आज्ञप्तोऽस्मि भगवता नीललोहितेन यथा—'नन्दिन्, मन्मथदाहेन भग्नमनोरथा पार्वती मन्निबन्धनेन भावेन महान्तं नियममनुतिष्ठन्ती गौरीशिखरनाम्नि पितुः शिखरे तपश्चरति । तपस्यन्त्याश्च तस्या व्यतीतो बहुतिथः कालः । तद्भवांस्तत्र गत्वा गृहीतमुनिवेषः कीदृशो वा तस्या नियमः, कीदृशो वाभिलाषबन्ध इति तत्सख्योर्जयाविजययोर्मुखेन विदित्वा पुनरागच्छतु' इति । तत्प्रभोर्नियोगमनुतिष्ठामि । (इति परिक्रामन्विमृश्य ।) प्रकृतिकठिनानि खलु स्त्रीणां चेतांसि । तथाहि ।

एषा शिरीषसुकुमारशरीरयष्टि-
श्चान्द्री कलेव नयनोत्सवमावहन्ती ।
संचेतुमिच्छति शिलाकठिनैः शरीरैः
संपादितान्यपि तपांसि तपोधनानाम् ॥ १ ॥

अपि च ।

शेते या किल हंसतूलशयने निद्राति सा स्थण्डिले
वस्ते या मृदुलं दुकूलमबला गृह्णाति सा वल्कलम् ।
या वा चन्दनपङ्कलेपशिशिरे धारागृहे वर्तते
पञ्चानामुदितोष्मणां हुतभुजां सा मध्यमासेवते ॥ २ ॥

(ततः प्रविशतः कुसुमावचयमाचरन्त्यौ जयाविजये ।)

जया—[1]हला विजय, तवच्चरणे किदमतीए गौरीए मणोरहकप्पद्दुमो कदा फलं दंसइस्सदि ।

विजया—[2]हला जए, तहा मम्महदाहपरुसहिअओ णिक्करुण-

---

१. हला विजये, तपश्चरणे कृतमत्या गौर्या मनोरथकल्पद्रुमः कदा फलं दर्शयिष्यति ।

२. हला जये, तथा मन्मथदाहपरुषहृदयो निष्करुणतया प्रथमं निदर्शनभूतः परमेश्वरो यदा दग्धहृदयो भविष्यति तदा फलं दर्शयिष्यति ।

दाए पढमं णिदंसणभूदो परमेस्सरो जदा दद्धहिअओ हुविस्सदि तदा फलं दंसइस्सदि ।

(इति पुष्पावचयमाचरतः ।)

नन्दी—इमे खलु तस्याःप्रियसख्यौ जयाविजये । यावदुपसर्पामि (तथा करोति ।)

जया—[1]हला, मम पुप्फकरण्डअं पूरिदं पुप्फेहिं । तुअ उण कहम् ।

विजया—(पुष्पकरण्डकं विलोक्य ।) [2]मह उण अद्धं पूरिदम् । अवसिट्ठं पूरइस्सम् । (इति पुष्पकरण्डकं पुष्पैः पूरयति ।)

नन्दी—(उपसृत्य ।) भद्रं भवतीभ्याम् ।

जयाविजये—[3]भअवं, वन्दामो ।

नन्दी—के युवाम्, किंनिमित्तं वा पुष्पावचयमाचरथः ।

उभे—[4]अम्हे हिमवदस्स कण्णाए गौरीए पिअसहीओ । तवच्चरणणिअमट्ठिदाए ताए देवपूआपुप्फाइं अवचिणुमो ।

नन्दी—किंनिमित्तं वा तपस्तस्याः ।

जया—[5]अणुरूवं वरं लहेअं त्ति ।

नन्दी—कोऽसावनुरूपो वरः ।

जया—

[6]जं किल भणन्दि वेआ णिच्चजुवाणं पुलाणपुलिसं च ।
जो किल धारइ णिच्चं ईस्सरसद्दं च चन्द्रलेहां च ॥ ३ ॥

---

१. हला, मम पुष्पकरण्डकं पूरितं पुष्पैः । तव पुनः कथम् ।

२. मम पुनरर्धं पूरितम् । अवशिष्टं पूरयिष्यामि ।

३. भगवन्, वन्दावहे ।

४. आवां हिमवतः कन्याया गौर्याः प्रियसख्यौ । तपश्चरणनियमस्थितायास्तस्या देवपूजापुष्पाण्यवचिनुवः ।

५ अनुरूपं वरं लभेयमिति ।

६. यं किल भणन्ति वेदा नित्ययुवानं पुराणपुरुषं च ।
यः किल धारयति नित्यमीश्वरशब्दं च चन्द्रलेखां च ॥

एसा णो प्पिअसही तं जेव्व परमेस्सरं पइं अहिलसन्दी महिन्द-प्पमुहं लोअपालं अवमण्णिअ तवच्चरणं करेइ । किं च मम्महदाहि-वइरादो पिदुणो घरं प्पविसिअ बलअं उक्कण्ठिदा आसी ।

नन्दी—तत्कथमुच्यताम् ।

जया—

पाण्डुक्खामसरीरा झडिदि णमन्तवअणसरसिरुहा ।
क्खीणा पव्वइणलिणी पसुपइणो विरहग्गहेण ॥ ४ ॥

नन्दी—ततः कथमासीद्वां प्रियसखी ।

जया—अदो वरं सुणु ।

चच्चव्वापिदचन्दणद्दिपवणप्पस्सं ण संमण्णए
सज्जं पल्लवकप्पिदं ण सहदे चन्दाअवं णिन्दइ ।
णोवा प्पोम्मपलासणिम्मिअतणुप्पावारमक्खम्मए
सा णीहारसिलाअले सुणु वरं तावादुरा वट्टइ ॥ ५ ॥

नन्दी—एवं प्रबलमदनज्वरा सा पश्चात्किं कृतवती ।

उभे—पच्छा किं वि उवाअं अदेक्खन्ती तवच्चरणेहिं परमे-स्सरं अहिमुखीकादुं पउत्ता तहा तिव्वणिअमं करेइ ।

---

एषा नौ प्रियसखी तमेव परमेश्वरं पतिमभिलषन्ती महेन्द्रप्रमुखाँल्लोकपा-लानवमान्य तपश्चरणं करोति । किं च मन्मथदाहिवैरात्पितुर्गृहं प्रविश्य बलवदुत्कण्ठितासीत् ।

१. पाण्डुक्षामशरीरा झटिति नमद्वदनसरसिरुहा ।
क्षीणा पार्वतिनलिनी पशुपतेर्विरहग्रहेण ॥

२. अतः परं शृणु ।
शश्वद्व्यापृतचन्दनाद्रिपवनस्पर्शं न संमन्यते
शय्यां पल्लवकल्पितां न सहते चन्द्रातपं निन्दति ।
नो वा पद्मपलाशनिर्मिततनुप्रावारमक्षम्यते
सा नीहारशिलातले शृणु परं तापातुरा वर्तते ॥

३. पश्चात्कमप्युपायमपश्यन्ती तपश्चरणैः परमेश्वरमभिमुखीकर्तुं प्रवृत्ता तथा तीव्रनियमं करोति ।

नन्दी—तत्किमनेन संदिग्धफलेन दुर्लभवस्तुप्रार्थनानिबन्धेन। देवेष्वियं कंचिदनुरूपं वरं वृणीताम्। अयं पुनः खण्डपरशुरग्रणीरेव वीतरागाणाम्। तद्बुद्धिमुपदिशतां भवत्यौ सख्यौ।

जया—[1]भअवं, एदं अम्हाणं प्पिअसहीए व्ववसिदं जहा परमेस्सरं एव्व पइं लहेअम्। अण्णहा अत्थ एव्व सिहरे कढिणेहिं तवच्चरणेहिं विलीणा भवेअं त्ति।

नन्दी—(आत्मगतम्।) श्रुतं श्रोतव्यम्। तमिमं वृत्तान्तं नीललोहिताय निवेदयामि। (प्रकाशम्।) भद्रे, यथागतं गमिष्यामः। (इति निष्क्रान्तः।)

जया—[2]अम्हे वि प्पिअसहीए पूआपुप्फाइं उवहरामो।

(इति निष्क्रान्ते।)

इति मिश्रविष्कम्भकः।

(ततः प्रविशति नैष्ठिकभूमिकावलम्बी शंकरः।)

शंकरः—(आत्मानं निर्वर्ण्य।) पर्याप्तेयं भूमिका पार्वतीं प्रति प्रतारयितुम्। तथाहि।

अंसे कृष्णाजिनश्रीस्त्रिगुणविरचिता मेखला श्रोणिभागे
पाणावाषाढदण्डो भसितविरचितं पुण्ड्रकं भालदेशे।
दर्भैः क्लृप्तं पवित्रं श्रवसि परिणमन्मानतुङ्गी पिशङ्गी
मौलौ पङ्क्तिर्जटानां जयवलयमिदं स्फाटिकं च प्रकोष्ठे॥ ६॥

(विचिन्त्य।)

यत्सा मन्मथमोहनास्त्रसमये सापत्रपा चारुणा
वक्त्रेण स्मितफुल्लगण्डफलकं व्रीडाविलोलेक्षणम्।
उन्मीलत्पुलकाङ्कुरं स्थितवती प्राप्तेव रूपान्तरं
तन्वी तत्पुनरद्य चेतसि मम प्रादुर्भवत्यञ्जसा॥ ७॥

---

१. भगवन्, एतदस्माकं प्रियसख्या व्यवसितं यथा परमेश्वरमेव पतिं लभेय। अन्यथात्रैव शिखरे कठिनैस्तपश्चरणैर्विलीना भवेयमिति।

२. आवामपि प्रियसख्याः पूजापुष्पाण्युपहरावः।

तदिदानीमेव गाढतरतरणिकिरणपरिक्लान्तामिव मेदिनीं मेघश्चातकमिव कठिनतपोविशेषतप्तामभ्युपपत्त्यै । यदैवं जयाविजयाभ्यां निवेदितो भावबन्धस्तस्या नन्दिना मह्यमर्पितस्तदैवात्मानमपाकर्तुमिवावधारयामि (इति सविनयं परिक्रामति ।)

(ततः प्रविशति जयाविजयाभ्यामन्वास्यमाना तपस्यन्ती पार्वती ।)

**पार्वती**—(वामाक्षिस्पन्दनं सूचयित्वा ।) [1]हला प्पिअसहिओ,

आणन्दवाहसिसिरं अकारणं फुरइ लोअणं वामम् ।
मह मन्दभाइणीए जाअइ एअस्स अज्ज किं णु फलम् ॥ ८ ॥

**जया**—[2]हला पव्वइ, इत्थिआणं वामक्खिचलणं पुरिसाणं दक्खिणक्खिचलणं सुउणं त्ति उपराणिआ भणन्दि । तहा मम्मह-दाहणिक्करुणो वि परमेस्सरो कस्स वि मुणिणो मुहेण तुमं अणुगिण्हिस्सदि ।

**पार्वती**—[3]सच्चं होदु प्पिअसहीए वअणम् ।

**विजया**—[4]सच्चं भणिदं सहीए जआए ।

**शंकरः**—(पार्वतीं दृष्ट्वा ।)

केदं तपः कठोरं केदं सुकुमारमङ्गमबलायाः ।
दिवसः कुत्र घनोष्मा कुत्र कला कमलकोमला चान्द्री ॥ ९ ॥

अहो महत्तपःक्लेशमनुभवति मामुद्दिश्य मञ्जुभाषिणी ।

---

१. हला प्रियसख्यौ,
आनन्दवाष्पशिशिरमकारणं स्फुरति लोचनं वामम् ।
मम मन्दभागिन्या जायतेऽस्याद्य किं नु फलम् ॥

२. सखि पार्वति, स्त्रीणां वामाक्षिचलनं पुरुषाणां दक्षिणाक्षिचलनं सुगुणमिति पौराणिका भणन्ति । तथा मन्मथदाहनिष्करुणोऽपि परमेश्वरः कस्यापि मुनेर्मुखेन त्वामनुग्रहीष्यति ।

३. सत्यं भवतु प्रियसख्या वचनम् ।

४. सत्यं भणितं सख्या जयया ।

जया—(विलोक्य ।) हला[1] पव्वइ, गहिअतणू विअ पढमस्समो जुवा कोवि महापुरिसो इदोमुहो आअच्छइ ।

पार्वती—आअदाणं[2] अदिहिणं तुम्हेहिं अच्चणा कादव्वा । अहं उण जहापुव्वं णिअमं अणुचिट्ठामि । (इति मौनमालम्बते ।)

शंकरः—(निर्वर्ण्य)

आभाति वल्कलवती पाण्डुक्षामा मदीयविरहेण ।
प्रतिपत्कलेव चान्द्री संध्याशकलेन संवीता ॥ १० ॥

(इति समीपमुपसर्पति ।)
(जयाविजये विष्टरमुपनयतः ।)
(शंकर उपविश्य मार्गखेदं नाटयति ।)
(पार्वती सख्यौ विलोकयति ।)
(सख्यौ वर्णिनं तालवृन्तेन वीजयतः ।)

शंकरः—(हस्तमुद्यम्य ।) गतः श्रमोऽस्माकमनन्यसामान्येन भवतीनां सौजन्येन ।

उभे—(सविनयम् ।) कुदो[3] आअच्छदि महापुरिसो ।

शंकरः—अद्य कैलासादागम्यते ।

जया—जइ[4] एव्वं अग्घं पडिगेण्हादु महापुरिसो ।

शंकरः—तथा । (इत्यर्घ्यप्रतिग्रहं रूपयित्वा ।) भद्रे, एकं प्रष्टुमभिलषामो भवत्यौ ।

जया—पुच्छदु[5] महापुरिसो ।

शंकरः—कस्येयं दुहिता, के भवत्यौ, किंनिमित्तं वा कठोरे तपसि वर्तते ।

---

१. सखि पार्वति, गृहीततनुरिव प्रथमाश्रमो युवा कोऽपि महापुरुष इतोमुख आगच्छति ।

२. आगतानामतिथीनां युवाभ्यामर्चना कर्तव्या । अहं पुनर्यथापूर्वं नियममनुतिष्ठामि ।

३. कुत आगच्छति महापुरुषः ।

४. यद्येवमर्घ्यं प्रतिगृह्णातु महापुरुषः ।

५ पृच्छतु महापुरुषः ।

जया—[1]एसा णो प्पिअसही हिमवदस्स कण्णआ पव्वईणामहेआ । अम्हे वि से प्पिअसहीओ जआविजए । अणुरूववरलाहणिमित्तं अ अस्से तवच्चरणम् ।

शंकरः—

जन्मान्ववाये प्रथमस्य धातुः पिता गरीयान्गिरिसार्वभौमः ।
वपुर्मनोहारि वचश्च रम्यं पदं च लोकादतिलोकमस्याः ॥११॥

तत्किमनया प्रार्थनीयो वरस्त्रिलोक्याम् ।

जया—[2]अत्थि को वि महापुरिसो ।

शंकरः—कोऽसावात्मसौभाग्यविशेषदुर्विदग्धः कठिनहृदयः ।

जया—[3]महापुरिस, सुणु दाव । ('जं किल भणन्दि वेदा' इत्यादि पठित्वा ।) एव्व परमेस्सरं अहिलसन्दी णो प्पिअसही तवोणिअमं अनुचिट्ठइ ।

शंकरः—(पार्वतीं प्रति) भद्रे, अपि सत्यमेतत् ।

पार्वती—(मौनमुन्मुच्य ।) [4]महापुरिस, जहा आअक्खिदं सहीहिं तहा मे मणोरहो ।

शंकरः—(आत्मगतम् ।) इदानीमात्मनिन्दनैरपि चित्तमस्याः परीक्षिष्ये । (प्रकाशम् । सहस्ततालं प्रहस्य ।)

आलेपो भसितं विभूषितमहिर्वासः पितॄणां वने
वेतालाः परिचारकाः प्रतिदिनं वृत्तिश्च भिक्षामयी ।
इत्थं यस्य शुभेतराणि चरितान्याख्यान्ति सर्वे जना-
स्तस्मिन्मौग्ध्यवशान्मतिस्तव रुचिं बध्नाति किं ब्रूमहे ॥१२॥

---

१. एषा नौ प्रियसखी हिमवतः कन्यका पार्वतीनामधेया । आवामप्यस्याः प्रियसख्यौ जयाविजये । अनुरूपवरलाभनिमित्तं चास्यास्तपश्चरणम् ।

२. अस्ति कोऽपि महापुरुषः ।

३. महापुरुष, शृणु तावत् । तमेव परमेश्वरमभिलषन्ती नौ प्रियसखी तपोनियममनुतिष्ठति ।

४. महापुरुष, यथाख्यातं सखीभ्यां तथा मे मनोरथः ।

४

अन्यच्च ।

जगत्त्रयीलोचनबालचन्द्रिका कुलस्य रत्नं भवती क्व भूभृतः ।
क्व कृत्तिवासाः पितृकानने वसन्नमङ्गलाचाररतिस्त्रिलोचनः॥१३॥

पार्वती—(कर्णौ पिधाय ।) [1]सन्तं पावं, सन्तं पावम् ।

शंकरः—यद्येवं ते दृढतरो मनसि निश्चयस्तर्हि

विधुंतुदं चान्द्रमसी यदि कामयते कला ।
परं वृणीताङ्कवती संप्रत्येव पिनाकिनम् ॥ १४ ॥

पार्वती—(मुखवैवर्ण्यं रूपयित्वा ।)

[2]जं कुव्वन्ति खु णिअमात्तसअला वि मउलिणा णमक्कारम् ।
तं गिरिसं णिन्दन्तो किं णु तुह जिहा ण होइ णिब्भिण्णा ॥१५॥

हला सहि, महापुरिसणिन्दाकालिणं तारिसं पावं जारिसं सुणु दाव णम् । एस उण वह्मणो ईस्सरणिन्दाणिरङ्कुसमुहो ता अण्णदो सरामो । (इति विस्रंसमानवल्कलमन्यतः परावर्तते ।)

शंकरः—(स्वरूपं प्रकाश्य ।)

परिणाहि स्तनयुगुलं कृशमवलम्बं क्षमेत किं गिरिजे ।
तव हस्तदानचतुरस्तपसा हि कृतोऽयमस्मि दासजनः ॥ १६ ॥

(इति पार्वत्या हस्तमवलम्बते ।)

(पार्वती सभयविस्मयप्रहर्षं पुलकिततनुः प्रस्विन्नगण्डा प्रतिपत्तिमूढा तिष्ठति ।)

जया—[3]प्पिअं णो, प्पिअं णो । सण्णिहिदो परमेस्सरो अह्माणं सक्कम्मपलिणामेण ।

---

१. शान्तं पापम्, शान्तं पापम् ।

२. यं कुर्वन्ति खलु नियमात्सकला अपि मौलिनो नमस्कारम् ।
तं गिरिशं निन्दतः किं नु तव जिह्वा न भवति निर्भिन्ना ॥
हला सखि, महापुरुषनिन्दाकारिणं तादृशं पापं यादृशं शृणु तावदेनम् । एष पुनर्ब्राह्मण ईश्वरनिन्दानिरङ्कुशमुखस्तदन्यतः सरामः ।

३. प्रियं नः, प्रियं नः । संनिहितः परमेश्वरोऽस्माकं सत्कर्मपरिणामेन ।

शंकरः—

आविःश्रमाम्बुकणिकामञ्जलतां गाढमङ्कुरत्पुलकाम् ।

मण्डितपयोधरां त्वामालिङ्ग्य कृती भवाम्यहं गिरिजे ॥ १७ ॥

तदिमां गान्धर्वेण विवाहेन पाणौकर्तुमभिलषामि ।

जया—[1]भअवं, अह्माणं पत्थणा तुए कादव्वा । जहा सअल-कुलाचलचक्कवट्टिणो तादस्स हिमवदस्स घरणिम्मिअविवाहकज्जे उवत्थातुं मं पडिच्छ ।

शंकरः—(सनिर्वेदमात्मगतम् ।) इतः परं कथमिमां वर्तिष्ये । (प्रकाशम् ।) भवतु । लोकयात्रा न हातव्या ।

जया—[2]पंचदिवसमब्भन्तरे जहा विवाहमङ्गलं भविस्सदि तहा करीअदु ।

शंकरः—त्रिचतुरदिवसाभ्यन्तर इति वक्तव्यम् । तथाहि ।

क्षणमपि विरहे मम प्रियायाः
कलयति कल्पसहस्रकोटिसाम्यम् ।
कतिपयदिवसप्रयोगमेनं
कथमिव हन्त सहिष्यते मनो मे ॥ १८ ॥

जया—[3]अह्मे गच्छामो विवाहमङ्गलं संवादेदुम् ।

शंकरः—तथा क्रियताम् । वयमपि सप्तर्षीन्विवाहमङ्गलाय प्रेषयितुं गमिष्यामः ।

(इति निष्क्रान्ताः सर्वे ।)

इति चतुर्थोऽङ्कः ।

---

१ भगवन्, अस्माकं प्रार्थना त्वया कर्तव्या । यथा सकलकुलाचलचक्रवर्तिनस्तातस्य हिमवतो गृहनिर्मितविवाहकार्ये उपस्थातुं मा प्रतीच्छ ।

२. पंचदिवसमभ्यन्तरे यथा विवाहमङ्गलं भविष्यति तथा क्रियताम् ।

३. वयं गच्छामो विवाहमङ्गलं संपादयितुम् ।

## पञ्चमोऽङ्कः ।

(ततः प्रविशति कञ्चुकी ।)

कञ्चुकी—आज्ञप्तोऽस्मि सकलकुलाचलचक्रवर्तिना हिमवता यथा—'शिलाधर, पूर्वेद्युरेव परमेश्वरप्रहिताः सारुन्धतीकाः सप्तर्षयः समागत्य लब्धवरायां वत्साया दिनमिदं विवाहमङ्गलयोग्यमकल्पयन् । तद्भवता चौषधिप्रस्थवासिनः पौराः पुरं परिष्क्रियतामिति नियोक्तव्याः' इति । तत्प्रभोर्नियोगमनुतिष्ठामि । (इति परिक्रम्य सर्वतो विलोक्य ।) भो भोः पौराः,

संनह्यन्तां विचित्राः प्रतिभवनमिह श्रेणयस्तोरणाना-
मुन्नेष्यन्तां समन्ताद्गगनतललिहः केतनानां पताकाः ।
संसिच्यन्तां पटीरद्रवभरितजलैर्वीथयो मुक्तपुष्पाः
संप्राप्तोऽसावुमायाः परिणयदिवसो विश्वमाङ्गल्यहेतुः ॥१॥

(आकाशे ।) किं ब्रूथ—'भगवद्वचनात्प्रागेव सर्वमस्माभिर्द्विगुणमाचरितम्' इति । (सर्वतो निर्वर्ण्य सहर्षम् ।) अहो, अस्मादादेशात्प्रागेव प्रवृत्तमहोत्सवं नगरम् । तथाहि ।

एषा चन्दनमालिका विरचिता चूतप्रवालैर्नवै
रम्भास्तम्भपरिष्कृतेषु भवनद्वारेषु संलक्ष्यते ।
आमन्द्रध्वनयः क्वणन्ति मुरजा मूर्च्छन्ति तन्त्रीस्वराः
सिञ्जानैर्मणिभूषणैस्तत इतो नृत्यन्ति वाराङ्गनाः ॥ २ ॥

इतश्च ।

उत्सर्पदागरवधूपपरम्पराभिः
प्रादुर्भवत्यभिनवो जलदागमोऽयम् ।
उन्नद्धतोरणमणिप्रभया स्फुरत्या
संजायते च शतमन्युशरासनश्रीः ॥ ३ ॥

अन्यतश्चामूः

धवलारुणमेचकैरपाङ्गैरपि रामा रचयन्ति रङ्गवल्लीः ।
कुचयोर्युगलेन पूर्णकुम्भात्पुनरुक्तानिव कुर्वते मृगाक्ष्यः ॥ ४ ॥

(सर्वतोऽवलोक्य ।)

विक्षिप्तः सरभसमेष पौरलोकै-
र्विस्फूर्जत्कनकरजःपिशङ्गदीप्तिः ।
प्रत्यग्रद्युमणिमयूखजालशोभा-
माधत्ते दिशि दिशि कौङ्कुमः परागः ॥ ५ ॥

तदेनं प्रवर्तमानं पुरपरिष्कारं प्रभवे निवेदयामि

(ततः प्रविशति विविक्तस्थानमधिवसन्हिमवान् ।)

हिमवान्—

पूर्वं नारदसूचनेन महता चन्द्रार्धचूडामणि-
र्जामातेत्यभवत्पुनस्तदनु तत्संप्राप्तिराकाङ्क्षिता ।
लब्धोऽसौ तपसा मया दिनमिदं तस्याश्च वैवाहिकं
जातो विघ्नगणानतीत्य कृतिनामद्याहमग्रेसरः ॥ ६ ॥

शिलाधरः—(उपसृत्य ।) जयतु स्वामी ।

हिमवान्—किं पुरपरिष्कारः प्रवर्तितो भवता ।

शिलाधरः—स्वामिन्, अस्मदीयोऽयमुत्सव इति प्रत्येकं पौराणामभिमानः । कथं परिहीयते पुरपरिष्कारः । सर्वं द्विगुणमाचरितं पौरैः ।

हिमवान्—शिलाधर, किं सर्वे पर्वताः पार्वतीपरिग्रहमङ्गलं द्रष्टुमागताः ।

शिलाधरः—स्वामिन्, अवधार्यताम् ।

भूपङ्केरुहकर्णिकायिततनुर्मेरुः सुराणां प्रियो
योक्त्रीभूतभुजङ्गराजकषणस्निग्धोपलो मन्दरः ।
विन्ध्यो व्योमनि भानुमालिपदवीजङ्घालश्रृङ्गावलिः
साकं संप्रति गन्धमादनमुखैस्त्वां द्रष्टुमभ्यागताः ॥ ७ ॥

हिमवान्—अथ कैलासः किं करोति ।

शिलाधरः—स्वामिन्, स खलु जामातृपक्षस्थितेनैव सार्धमागमिष्यति ।

हिमवान्—युज्यते । अथ विश्वावसुप्रभृतय आगता गन्धर्वाः सवधूगणाः ।

शिलाधरः—

आतोद्यपाणयः सर्वे गन्धर्वाः सवधूगणाः ।
उपवीणयितुं प्राप्ता मानयन्तस्तवोत्सवम् ॥ ८ ॥

हिमवान्—आगताः किमप्सरसः सार्धममरैः ।

शिलाधरः—श्रूयताम् ।

विद्युद्वल्लीवितानव्यतिकरसुषमां व्योम्नि विस्तारयन्त्यः
कान्त्या नीलोत्पलानां श्रियमिव नयनैर्दिङ्मुखैर्दर्शयन्त्यः ।
ज्योत्स्नालक्ष्मीं दिवापि स्मितरुचिविसरैर्विष्वगुत्पादयन्त्यः
सर्वाः स्वर्वारयोषाः सममरगणैरागताः प्रीतये नः ॥ ९ ॥

हिमवान्—यद्येवमन्तःपुरं गत्वा भवान्कुलवृद्धां कौशिकीं पुरस्कृत्य समागताभिरप्सरोभिर्वत्सा पार्वती सम्यगलंक्रियतामित्यभिधत्ताम् । अलंक्रियाप्रकारं च कौशिकी समागत्य मह्यमाचष्टाम् । किंचागतानां वधूनां गिरीणां च सत्कृतये तत्रभवता संविधातव्यः सकललोकवस्तुसंभारः ।

शिलाधरः—यथादिष्टं स्वामिना तथा सर्वं संपादयिष्यामि । (इति निष्क्रान्तः ।)

(प्रविश्य)

नारदः—

प्राज्ञया यदुपक्रान्तं कार्यं गुरु दिवौकसाम् ।
अन्तरायानतिक्रम्य तद्धि सिद्ध्यति सांप्रतम् ॥ १० ॥

(इति परिक्रम्यावलोक्य च ।) अयमध्यास्ते विवाहमण्डपं हिमवान् । तदेनमुपसर्पामि । (इत्युपसर्पति ।)

हिमवान्—(विलोक्य।) अये, नारदः। (अञ्जलिं बध्नाति।)

नारदः—हिमवन्, अभ्युदयः खलु तत्रभवतः।

हिमवान्—भवदुपक्षिप्तस्य फलमिदं बीजस्य। (इत्यासनमुपनयति।)

(नारद उपविशति।)

(ततः प्रविशति कौशिकी। उपविश्य पार्वत्याः परिकर्मप्रकारं निर्दिशति।)

हिमवान्—किमलंकृता वत्सा।

कौशिकी—भगवन्, कथयामि। श्रूयताम्।

हिमवान्—अवहितोऽस्मि।

कौशिकी—

असमग्रभूषणायास्तनुतरकौशेयवासधारिण्याः।
आलिप्तमङ्गमखिलं तैलेन सुगन्धिना तस्याः॥ ११॥

हिमवान्—ततस्ततः।

कौशिकी—

मणिपीठवर्तिनीं तां मङ्गलशङ्खेषु मन्द्रघोषेषु।
अम्भोभिरमरनद्याः सखीजनो विहितमज्जनां व्यतनोत्॥१२॥

हिमवान्—ततस्ततः

कौशिकी—

मङ्गलमज्जनविशदा कर्पूरक्षोदपाण्डुरं क्षौमम्।
साधत्त जलदधौता द्यौरिव शरदिन्दुचन्द्रिकोद्भेदम्॥ १३॥

हिमवान्—ततस्ततः।

कौशिकी—

चरणकमलं तदीयं लाक्षाबालातपेन संवलितम्।
अध्यास्त भृङ्गमालावलिभिर्मणिखचितनूपुरव्याजात्॥ १४॥

हिमवान्—ततस्ततः।

कौशिकी—

बद्धा मणिमयकाञ्ची तस्याः परिणाहशालिनि नितम्बे।
पङ्क्तिरिव सारसानां सुरसरितः पुलिनमण्डलाभोगे॥१५॥

हिमवान्—ततस्ततः ।

कौशिकी—

करतलयुगपरिणद्धे कुचकलशे कुङ्कुमारुणे तस्याः ।
सिन्दूरिते करिपतेः कुम्भे नक्षत्रमालेव ॥ १६ ॥

हिमवान्—ततस्ततः ।

कौशिकी—

कमनीयतानिवासः कर्णस्तस्या विचित्रमणिभूषः ।
सविधप्रसूनरत्नं शङ्खनिधिं दूरतरमकरोत् ॥ १७ ॥

हिमवान्—ततस्ततः ।

कौशिकी—

मुक्तातान्टङ्कयुगं प्रतिमुक्तं कर्णपार्श्वयोरस्याः ।
मुखकमलमिव निषेवितुमागतममृतांशुबिम्बयुगम् ॥ १८ ॥

हिमवान्—ततस्ततः ।

कौशिकी—

आयामिनोस्तदक्ष्णोरञ्जनरेखाविधिं वितन्वन्त्याः ।
पाणिः प्रसाधिकायाः प्रापदपाङ्गं चिरेण विश्रम्य ॥ १९ ॥

हिमवान्—ततस्ततः ।

कौशिकी—

तस्या ललाटसीमनि चन्दनपङ्केन मेनया लिखितम् ।
आसीत्सितातपत्रं तिलकमनङ्गस्य दर्शितच्छायम् ॥ २० ॥

हिमवान्—ततस्ततः ।

कौशिकी—

आगुल्फलम्बमस्याः कुन्तलमन्तर्निगूढमन्दारम् ।
संयम्य चतुरबन्धं सखीजनः स्तिमितनेत्रमास चिरम् ॥२१॥

हिमवान्—ततस्ततः ।

कौशिकी—

अङ्गं भूषणनिकरो भूषयतीत्येष लौकिको वादः ।
अङ्गानि भूषणानां काममपि सुषमामजीजनंस्तस्याः ॥ २२ ॥

हिमवान्—यद्येवं तत्सम्यगलंकृता वत्सा । तद्भवत्या संनिधिविशेषेण ।

(नेपथ्ये ।)

भ्राम्यन्मन्दरकन्दराहतिचलक्षीरोदपूरोदर-
स्फूर्जद्वीचिपरम्पराकलकलप्रोच्चण्डवैतण्डिकः ।
निर्घोषैः कुलशैलगह्वरगुहारन्ध्राणि वाचालय-
न्दिव्यः कश्चन दुन्दुभिः पररवः साटोपमाहन्यते ॥ २३ ॥

(सर्वे ससंभ्रममाकर्णयन्ति)

(पुनर्नेपथ्ये ।)

जम्भारे भव पार्श्वतः परिसरेणायाहि लक्ष्मीपते
वेधः स्वस्त्ययनान्यधीष्ट मुनयः प्रब्रूत रौद्रीमृचम् ।
चन्द्रार्कावपि चामरे विधुनुतां छत्री भवाहीश्वर
प्रष्ठा रुद्रगणाः प्रयात पवन स्पन्दस्व मन्दोदयः ॥ २४ ॥

हिमवान्—भगवन्नारद, कोऽयं देवानामिव कोलाहलः श्रूयते ।

नारदः—सकलजगदुत्पत्तिस्थितिप्रलयैरुद्घुष्यमाणमहिमा चराचरगुरुस्ते जामाता चटुलविवाहवेषमास्थाय सह देवगणैरित एवाभिवर्तते । अयं कलकलस्तत्पुरःसरनन्दिनः प्रोत्सारणायाः । तद्भवानर्घ्यपाणिः प्रत्युद्यातु भगवन्तमिन्दुशेखरम् ।

(ततः प्रविशति गृहीतविवाहवेषः शंकरो देवलोकश्च ।)

शंकरः—(शार्ङ्गिणं प्रति ।) अमरावतीमतिक्रम्य शोभते पुरमिदमोषधिप्रस्थम् ।

शार्ङ्गी—किं परिहीयते महेन्द्रान्महीमहेन्द्रः ।

(हिमवानर्घ्यपाणिरुपसर्पति ।)

**शंकरः**—(अवलोक्य ।) अभ्युद्गच्छति मामगाधिराजः । तद्वाह-नादवरुह्य यास्यामः । (तथा करोति ।)

**हिमवान्**—

आ चार्मणानामपि दूरमक्ष्णामकर्तृकाणां वचसामभूमिम् ।
जामातरं लब्धुममुं गिरीशं कियन्ति पुण्यानि मया कृतानि ॥ २५ ॥

(इत्युपसर्पति ।)

**शंकरः**—(विलोक्य ।)

अतिगुरुचरणक्रमैर्वितन्व-
न्नवनमितोन्नमितस्थलामिवोर्वीम् ।
विनयमुपदिशन्निवात्मभाजा-
मयमुपसर्पति मामगाधिराजः ॥ २६ ॥

(हिमवानर्घ्यमुपहरति ।)

(शंकरः सप्रणामं गृह्णाति ।)

(हिमवान्सलज्जं मुखमवनमयति ।)

(जामातरं पुरस्कृत्य हरिविरञ्चिमुखाः परिक्रामन्ति ।)

**ब्रह्मा**—भगवन्, कुत्र वैवाहिकी वेदी ।

**हिमवान्**—इत इतो भवन्तः ।

(सर्वे उपसर्पन्ति ।)

**बृहस्पतिः**—हिमवन्, प्रत्यासन्नो मुहूर्तः ।

(ततः प्रविशति जयाविजयाभ्यां सह पार्वती ।)

**पार्वती**—अज्ज क्खु मे मणोरहकप्पद्दुमो फलं दंसेइ ।

**जया**—(सस्मितम् ।) हेला पव्वई, एत्तिअं तुह प्पिअसहिओ वि आवं जाआ ।

---

१. अद्य खलु मे मनोरथकल्पद्रुमः फलं दर्शयति ।

२. हला पार्वति, एतावत्तव प्रियसख्यावपि आवां जाते ।

पार्वती—(सासूयम् ।) हला विजए, किं एसा भणइ ।[1]

विजया—हला पव्वइ, एसा सरसालापपेसलत्तणं दंसेइ ।[2] (इत्युपसर्पति ।)

ब्रह्मा—(शार्ङ्गिणं प्रति ।) भगवन्, सर्वे देवाः सह भूतगणैर्यथास्थानमुपविशन्तु ।

(सर्वे तथा कुर्वन्ति ।)

हिमवान्—अस्मत्पक्षाः कुलपर्वताश्च कैलासेन समं वामपार्श्वमुपविशन्तु ।

(कुलपर्वताश्च तथा कुर्वन्ति ।)

शंकरः—(पार्वतीं विलोक्य । आत्मगतम् ।)

एषा विशेषरम्या विवाहवेषेण मोहनेन दृशा ।
प्रतिभाति मानसे मे मदनसहस्राणि कल्पयन्तीव ॥ २७ ॥

बृहस्पतिः—भो शंकर, वध्वा सहास्यां वेदिकायां प्राङ्मुखो वर्तेथाः ।

(शंकरः पार्वत्या सहोपविशति ।)

शंकरः—(आत्मगतम् ।)

नन्दितनयनचकोरा नवनवलावण्यकौमुदीविसरा ।
उत्कूलयति मनो मे जलधिं सैषा कलेव चान्द्रमसी ॥२८॥

बृहस्पतिः—(अग्निमुपसमाधाय ।) शंकर, त्वदीयेन पाणिना पार्वत्याः पाणिमवलम्बस्व ।

(शंकरस्तथा करोति ।)
(पार्वती पुलकोद्भेदमभिनयति ।)

शंकरः—(आत्मगतम् ।)

आभाति बालिकेयं पाणिस्पर्शेन पुलकितावयवा ।
अभिनववसन्तसङ्गादाविर्मुकुलेव बालचूतलता ॥ २९ ॥

---

१. हला विजये, किमेषा भणति ।
२. हला पार्वति, एषा सरसालापपेशलत्वं दर्शयति ।

ब्रह्मा—वधूवरौ, पावकं प्रदक्षिणां कुरुताम् ।

(उभौ तथा कुरुतः ।)
(पार्वती शंकरमवलोकयति ।)
(शंकरः प्रत्यवलोकयति ।)
(पार्वती दृष्टिं परावर्तयति ।)

शंकरः—(आत्मगतम् ।)

अवलोकनाय लोला दृष्टिरियं मृगदृशो निवृत्तिमती ।
गत्वा प्रतिप्रवाहं राजति शफरी निवर्तमानेव ॥ ३० ॥

(बृहस्पतिः पार्वत्याः पाणिना जलाञ्जलिं कारयति ।)
(पार्वती धूमाक्रमेण वैक्लव्यं निरूपयति ।)

शंकरः—(आत्मगतम् ।)

प्रस्विन्नगण्डफलकच्युतपत्रलेख
धूमानुषङ्गगलिताञ्जनपाटलाक्षम् ।
म्लायद्वसन्तकुसुमं मुखमायताक्ष्या-
श्चित्ते ममार्पयति कामपि रागमुद्राम् ॥ ३१ ॥

बृहस्पतिः—शंकर, पार्वत्याः पादकमलं पाणिभ्यामश्मानमारोपयतु भवान् ।

(शंकरः स्मयमानमुखस्तूष्णीं तिष्ठति ।)

कुलपर्वताः—(ससंभ्रमम् ।) भगवन्, प्रमाणभूतेन पुरोधसा यदुच्यते तदनुष्ठीयताम् ।

भूतगणः—(ससंरम्भम् ।) कुलपर्वताः, कथमिव नियम्यते त्रिभुवननियन्ता नीललोहितः ।

ब्रह्मा—(सस्मितमुभयान्निवार्य ।) सकलजननियामिका स्वतःप्रमाणभूता श्रुतिरेव सम्यगित्थमभिदधाति । तद्यथोक्तमनुष्ठीयताम् ।

(शंकरः संकुचिताभ्यां पाणिभ्यां पार्वत्याः पादकमलमश्मानमारोपयति ।)
बृहस्पतिः कर्मशेषं समापयन्वधूवरौ ब्रह्माणं प्रणमयति ।)

ब्रह्मा—(हस्तमुद्यम्य ।)

सकलजगतां सवित्रोरनन्यसामान्यमस्तु वां प्रेम ।
भुवनभयभङ्गदक्षो भवतु कुमारोऽपि तारकध्वंसी ॥ ३२ ॥

(इत्याशिषं प्रयुङ्क्ते ।)

(प्रविश्य ।)

वृद्धपुरंध्र्यः—

अण्णोण्णसमसरीराणं अण्णोण्णप्परूढपेम्माणं ।
जोण्हाणिसाअराणं तुह्माणं होदु को वि अणुराओ ॥ ३३ ॥

(इत्यार्द्राक्षतारोपणमाचरन्ति ।)

नारदः—(उत्थाय साञ्जलिबन्धम् ।) भगवन्, देवकार्यहेतोः कृतापराधं कंदर्पं पुनर्गृहीतवपुषं पदकमलसेविनं च भवाननुगृह्णातु ।

शंकरः—यथा रोचते तथा भवतु ।

(ततः प्रविशति रतिवसन्ताभ्यां सह पूर्वाधिकविग्रहः कामः ।)

सर्वे—

माधुर्यसौरभतरङ्गितचापबाणः
सख्युः करं समवलम्ब्य शनैरनङ्गः ।
आयाति रुद्रनयनानलदग्धकायः
पूर्वाधिकः कथमहो ललनासमेतः ॥ ३४ ॥

(सर्वे विस्मयं निरूपयन्ति ।)

हिमवान्—(सहर्षम् ।) तथा ।

पुण्यैरेव पुरातनैरुपनतैर्देवेन विश्वात्मना
पुत्री भूरिगुणावदातचरिता पाणौ गृहीता मम ।
देवानां च मनोरथः परिणतः प्राप्यानवद्यं वपु-
र्लोकानन्दकरः स्मरोऽपि नयनातिथ्यं विधत्ते पुनः ॥ ३५ ॥

शंकरः—किमतःपरं ते प्रियमस्ति ।

हिमवान्—समधिगतसकलमनोरथानां किमतःपरं प्रार्थनीयम् । तथापीदमस्तु भरतवाक्यम् ।

---

१. अन्योन्यसमशरीरयोरन्योन्यप्ररूढप्रेम्णोः ।
ज्योत्स्नानिशाकरयोर्युवयोर्भवतु कोऽप्यनुरागः ॥

५

॥ श्रीः ॥

# वीरधर्मदर्पणनाटकम् ।

काशीस्थसेंट्रलहिंदूकालेजाख्यविद्यालये

संस्कृतवाङ्मयाध्यापने नियुक्तेन

अपरांतविद्यापीठात् बी. ए. इति प्रयागविद्यापीठात् एम्. ए.

इत्यांग्लसंमानपदाभ्यामधिगतगौरवेण

## परशुराम नारायण पाटणकर

इत्याख्येन दाक्षिणात्यकविना विरचितम् ।

काश्यां हितचिन्तकमुद्रणालये च मुद्रितम् ।

श. १८२९ । सं. १९६४ । क्रि. १९०७ ।

मूल्यम् (१) एको रूप्यकः ।

DEDICATED

To

THE HONORABLE

Dr. RAMKRISHNA GOPAL BHANDARKAR

M. A. Ph. D. LL. D. C. I. E.

&c. &c.

AS A HUMBLE TOKEN OF RESPECT

in grateful remembrance of many a happy hour spent at his feet in the reading of Sanskrit Literature in the Deccan College, Poona:

*by*

HIS HUMBLE PUPIL

P. N. Patankar.

# Preface.

Dr. Bhandarkar was kind enough to read a rough Ms. of this drama a few years ago, and pronounced it as reading "well, very well in places." He asked me to give a finish to it and enjoined me to use Prakrit in its place in the work, a feature, that at first I had dispensed with, fearing it was likely to be neglected by ordinary readers. The worthy Doctor's injunction has been obeyed and the work thus wears a genuine garb as a Sanskrit drama. The Prakrit, having its own idiomatic peculiarities, could not be a mere literal conversion of the Sanskrit and had mostly to be written independently. The Sanskrit *chhaya* is appended in the body of the text itself. I only hope that the imperfections of the work do not outweigh the better qualities.

A moral purpose is kept in view throughout, involving the contrast of the spiritual with the worldly life and emphasising devotion to duty and to truth.

* * In the case of conjuncts of nasals with class-consonants the use of the *anusvára* is preferred as more convenient. * *

P. N. Patankar.

# ग्रंथोपन्यासः ।

अर्वाचीनसंस्कृतवाङ्मयाध्ययनं पाश्चात्यपंडितवरसंमत्यनुगृहीतं प्राधान्येनेतिहाससंबंधनिर्णयमुद्दिश्य प्रवर्तते । संस्कृतकाव्यनाटकाद्यालोचनेन रसास्वादनफलं त्वानुषंगिकमात्रम् । येन संस्कृतभाषायां कविकर्मप्रवृत्तिरतीव न्यूनीभूता । मुद्रणादिसाधनैः प्रकाशिता अपि कतिपये काव्यग्रंथा लोकरुचिविषयबाह्यभूता इव प्रथामगत्वास्तमितकल्पा अभूवन् । काव्यनिर्माणे बहूनामप्रवृत्तेश्च रसवद्ग्रंथनिर्माणं दुर्लभतरमेव । प्रत्युत प्राचीनभाषायां ग्रंथरचना विद्वत्त्वैकसमाश्रयाल्पधैर्यवासिता खेदसंवयदोषारूपदमुपहास्यताहेतुर्निर्मातॄणां पंडितमानिताद्दोषमावहेदिति शंकया तत्र प्रवृत्तिरुपेक्षितैव सज्जनैर्यर्हसर्गिकं सत्त्वशीलानाम् ।

एवं स्थिते त्वयेदं नाटकं विरचितं किमनेनास्थानसंरंभेणेत्याक्षेपोऽत्र संभवी । तन्निरासायैवं विज्ञाप्यते । काव्यग्रंथालोचनमध्यापनसाधनमिति निर्विवादम् । प्रयोजनविवेकपूर्वमारब्धा अभिनवाः काव्यग्रंथाः स्वस्वकालप्रथितश्रेष्ठाचारानुसरणप्रयोजनव्यंजननिबंधना यथाधिकारमध्येतॄणां रसास्वादनसदाचारनिरूपणपदवाक्यप्रमाणपरिज्ञानरूपफलत्रयानुबद्धाः परिचिताचारविचारसंबद्धतयाभिनवत्वमात्रहेतुनापि च प्राचीनग्रंथापेक्षयाप्यधिकतरामुपयुक्ततां भजंते । संप्रति चातिसुकुमारधियां विद्यार्थियूनां विमलचित्तपरिपाकदक्षावधानैराचार्यैर्ब्रह्मचर्यादिगुणानुरागोपोद्बलका ग्रंथास्तदध्यापनक्रमेऽवश्यतयाद्रियंते । तादृग्ग्रंथनिर्माणं सर्वदैवावश्यभूतमिति न केनाप्यपोह्येत ।

एवमुद्दिष्टस्वरूपोऽयं ग्रंथः । ग्रंथनिर्माणशक्तिशंका तु मंदधियां नित्यसुलभा । तद्भिया प्रवृत्तिं सर्वथा हातुमपि न युक्तम् । अकरणान्मंदकरणं श्रेय इति न्यायेनैवाहमस्मिन्नाटकनिर्माणधार्ष्ट्ये व्यवसितः । एतदारंभसंरंभो नाटकांतरपरिशीलनादात्मशक्तिनिरूपणेच्छया समजनि । आरभ्य च किमपि लब्धांतर इव संपूर्णसंदर्भरचनाभिनिवेशमहं धृतवान् । विषयालोचने च तरुणवयसो विद्यार्थिजनस्योचितं किमपि निबद्धव्यमिति निश्चितम् । विद्यालयस्थानां विद्यार्थिनां नाटकप्रयोगे स्त्रीभूमिकाबाहुल्यं शृंगाररसप्रथनं च नेष्टे अभ्युदयनिःश्रेयसहेतवो ब्रह्मचर्यमारभ्य सगुणनिर्गुणोपासनापर्यवसायिन आचारास्तु श्रेयांस इति संप्रधार्य नाटकमिदं गुडजिह्विकान्यायेन समीहितफलावहमित्यहं रचितवान् । अत्र वीरोऽङ्गी रसः । करुणहास्यौ बहुतरं शृंगारवर्जमितरे

रसाश्च यथाप्रसंगमंगानि । काव्यगुणानां प्रसादगुणसिद्धये यथाशक्ति यत्नः कृतः सुधीभिर्विभावयिष्यते । अलंकारवैचित्र्यमल्पांशेनैवांगीकृतम् । बुद्धिपुरःसरं तत्प्रपंचो नादृतः । दोषपरिहारः काव्येऽसुकर इति कविकर्मणि प्रवृत्तानां नित्यानुभवः । तत्र सावधानतया व्यवसितस्यापि कानिचिद्दोषस्थलानि पुनःपुनरवलोकने ममापि प्रादुर्भवंति सूक्ष्मदृशां तु असंख्यातानि गोचरीभविष्यंति । तत्संशोधनाय भूयोऽपि यथाशक्ति कृतोत्साहोऽस्मि । नाटकनिर्माणपरिश्रमस्येयत्ता विशाखदत्तकविना 'कर्ता वा नाटकानामिममनुभवति क्लेशमस्मद्विधो वा' इति वर्णनयोट्टंकिता । तत्रालमस्मदुपन्यासगौरवेण ।

अत्र प्राकृतप्रयोगाः पुरातननाटकीयशौरसेनीप्रयोगानुसारेण कृताः । पैशाचीप्रयोगाश्च स्थूलभेदानुसंधानेनैव चतुर्थांके वैचित्र्यहेतुतः संदृब्धाः । प्राकृतानि देशकालभेदादसंख्यरूपांतराणि सर्वात्मना दुरवगमाणि । अतो महाकविप्रयोगानुकरणमेवात्र समुचितमिति विशेषोल्लेखोऽनवश्यः ।

ग्रंथरचनाधिकारारोहणे व्याकरणादिशास्त्रविज्ञानसामग्री प्रथमसोपानम् । तत्र यथाशक्ति मया पदन्यासः कृतः । स्मृतिदोषात् क्वाचिदत्र रचनासु च्युतसंस्कारताप्यभिलक्ष्येत । तत्तत्स्थलसंस्करणायाहं तद्विज्ञानक्षणमेव सप्रश्रयं सिद्धोऽस्मि । विद्वद्भिर्दोषप्रकटनानुग्रहेणाहं संभाव्य इति प्रार्थये ।

छिन्नाः प्रयोगास्तु केवलवैयाकरणमतमनादृत्य वाच्यवाचकत्वानिर्दुष्टत्वादेतव इत्युपात्ताः । ते प्राचीनार्वाचीनप्रयोगविज्ञानशालिनां विदुषां नोद्वेगकरा इति तत्संमतग्रंथाधारेण समर्थनीयविषयम् । अतस्तान्दोषात्मतयोल्लिख्य तद्विषयवादारंभप्रसंगाद्विरम्यते । अस्मिन् ग्रंथसंशोधनादिविषये महाशयैः माधव व्यंकटेश लेले बी ए. एल. सी. ई. एतैः अस्मत्सुहृदा काशीस्थेन मीमांसान्यायदर्शनाध्यायिना भाऊशास्त्री वझे इत्याख्येन विद्यार्थिना च विशेषप्रदर्शनैः कृतोपकारोऽस्मि ।

मुद्रणे च हितचिंतकमुद्रणयंत्रस्वामिना बळवंतरावपावगीतिप्रसिद्धस्य सन्निभस्य मयि गुरूपकाराः । अपि च

अंतर्बाह्यशरीराणि व्यापारयति यो महान्
नेता प्रतिक्षणं तस्य निर्वाच्योपकृतिः कथम् ।

इति विज्ञप्तिः प० ना० पाटणकरस्य ।

# शोधनिर्देशः ।

| पृष्ठम् । | पंक्तिः । | शोधः । |
|---|---|---|
| ९ | तलात् ५ | मोघमस्मद्० |
| ११ | ९ | भवंतमपि |
| १२ | " | ०राष्ट्रो |
| १३ | तलात् ३ | ०मानेनैनं वा |
| १९ | " ९ | प्रसक्तत्वा० |
| ३० | ९ | दृष्ट्वा स्व० |
| ४६ | ७ | ०बोदे क० |
| ५७ | ९ | ०रन्यतर० |
| ५७ | अंतिमा | कुमार समस्सस समस्सस [ कुमा०—सिहि । ] |
| ५९ | तलात् ३ | समस्सासेदु भअवं वअस्सं । [ समा०—स्यम् । ] |
| ७० | ९ | ०मिवावलोक्य |
| ७१ | ७ | दृष्ट्वा मयि |
| ८० | ६ | निहतेभाश्वसाद्या० |
| ९० | अंतिमा | एआरिसेण |
| ९१ } ९२ } | पृष्ठादिः | सप्तमोऽङ्कः । |
| ९३ | ५ | हंतुं |
| ९४ | १२ | अद्यापि मे पितृ० |
| ९५ | पृष्ठादिः | सप्तमोऽङ्कः । |
| ९६ | तलात् ३ | शांकुक० |

[ अल्पीयांसस्तु कतिचिद् दृङ्मात्रवेद्या इत्युपेक्षिताः । ]

अथ

# वीरधर्मदर्पणनाटकम् ।

## प्रथमोऽङ्कः

एकः ख्यातो महात्मा पितृवचनकरश्चैकवागेकजानिः
वीरश्चैकस्त्रिलोक्यां कविवचनसुधासंपदां चादिहेतुः
यद्दास्याद्दैवतत्वं स्वयमधिगतवान्वानरो वायुसूनुः
वैदेह्यानंदकंदः स भवतु भवतां भूतये कोऽपि भूपः ।

अपि च

सामोपायैकवृत्त्या चरितुमभिलषन्सर्वभूतानुकंपी
दुर्मर्यादेषु पापेष्वपि सुजनतया वत्सलो यो ममत्वात्
स्थित्येकार्थं तु दंडव्यवहरणपरो दुर्विनीतान्विनेष्यन्
उत्थायी जागरूकः स भुवि विजयते भारतो धर्मराजः ।

( नांद्यंते )

सूत्रधारः--अलमतिविस्तरेण । ( नेपथ्याभिमुखमवलोक्य ) मारिष इतस्तावत् ।

( प्रविश्य )

नटः-भाव एषोऽस्मि । आज्ञापयतु भावः को नियोगोऽनुष्ठीयतामिति।

सूत्रधारः-मारिष विदितमेव ते यथाज्ञप्तोऽस्म्यहं रसभावकोविदविद-

ग्धभूयिष्ठयानया परिषदा किमप्यपूर्वं नाटकमद्य भवताभिनेयमिति ।
अस्ति चास्मद्गोचरीभूतमाधुनिकेनैव केनचित्कविना विरचितं वीरधर्मदर्पणं नाम भारतीयजयद्रथवधकथाश्रयं नवं नाटकं यत्प्रयोगेणाद्याहमार्यमिश्रान्संभावयितुमुद्युक्तोऽस्मि ।

नटः—भाव स एवैष आधुनिकः कविः भीमातटे संनिवेशितकुलविस्तारस्य रत्नागिरिवास्तव्यनरहरिभट्टप्रपौत्रस्य माधवशर्मणः प्रपौत्रस्य नारायणशर्मण आत्मजः परशुरामशर्मास्मत्सुहृद् । यत्कृतिरस्माभिरात्मविनोदार्थमभिनीतपूर्वा ।

सूत्रधारः—अथ किम् । स खलु अध्यापकवृत्त्या विविधान्देशानधिवसन्

व्याकुर्वाणः पूर्वसूरिप्रबंधान् ध्यायं ध्यायं काव्यनिर्माणबीजम्
स्वांतेवासिप्रीतये यत्नशीलो जग्रंथैतन्नाटकं सत्प्रयोगम् ।

नटः—भाव ननु रूपकसर्वस्वभूतेषु पुरातनप्रबंधेषु सततास्वादितरसायाः काव्यनिकषकल्पाया अस्याः परिषदो नूतनेनानेन कविना निर्मितस्य गीर्वाणवाणीनाटकस्य प्रयोगदर्शनेन परितोषो भवेन्न वेति शंकया कातरं मे मनः ।

सूत्रधारः—मा अत्राकुलीभवतु भवान् । न हि परितोषैकफलाज्ञात्र भवताम् ।

कविवाङ्निर्मितेर्माभूदियत्तेति कृपालवः
प्रोत्साहनपरा आर्या आद्रियंते नवां कृतिम् ।

निजकृतावुत्प्रेक्षितदोषपूगस्यास्य कवेश्चात्रेयं विचित्रा वाचोयुक्तिः ।

आभीक्ष्ण्यसेवननिवृत्तिनिशानिगूढे
तत्तत्कवीशमिहिरे नियतेर्नियोगात्
स्याद्वा तदन्वयविकासिकलो नवीनो
दोषाकरोऽपि कविरेष सतामपूज्यः ।

नटः—सुष्ठु दृष्टम् । एवमेव च निरवधौ कालेऽन्येऽपि सत्काव्यकुशलाः कवय उत्पत्स्यंते ।

सूत्रधारः—तथापि मारिष ।

विज्ञाय शृंगारविलासशून्यं पुंभूमिकाप्रायमिदं च नाट्यम्
विधीयतां दक्षतया प्रयोगो यथैष संतोषमुपैति रंगः ।

नटः—सुविहितप्रयोगतया भावस्य न किमपि परिहास्यते ।

( नेपथ्ये वीणामुरजध्वनिः । )

सूत्रधारः—हंत सज्जाः कुशीलवाः । तथा हि

ललितार्थगीतवचसां पुरःसरो
विदधत्सभां सपदि मंत्रवत्स्थिराम्
मृदुदुंदुमायितमृदंगमंजुलो
मधुरं क्वणन्स्फुरति वल्लकीस्वनः ।

नटः—( अवलोक्य ) भाव ननु एते महाभागस्य श्रीमतः कुरुपितामह-स्योपस्थायिनश्चारणा अस्मत्साहाय्येन स्वनियोगमनुष्ठातुमुपायाताः ।

सूत्रधारः—यद्येवं नन्वमुमेव स्वरग्राममाश्रित्य प्रवर्त्यतां संगीतकम् ।

नटः—अपीमं विजिगीषूत्साहोद्दीपनं शरत्समयमधिकृत्य गायेयम् ।

सूत्रधारः—उपपन्नम् ।

नटः—( प्राकृतमाश्रित्य गायति )

विमलसुरसविउलाइं जलाइं
विअसिदणवणवसिअकमलाइं ।
कुह वि तरंगिअकासणिगूढा
छीरणिहिं णु खमा अवगाढा ।
णीलणहसि रुइरअरो तरणी
ववगअपंकसुहवधा धरणी ।
पचलइ विस्सविअअकिदसग्गो
जत्तुस्सवरसिओ णिववग्गो ।
अत्थकामविअएण सराअं
गणेइ धम्मपरो ण अ काअं । विम० ।

[ विमलसुरसविपुलानि जलानि
विकसितनवनवसितकमलानि ।
क्वापि तरंगितकाशनिगूढा
क्षीरनिधिमिव क्षमावगाढा ।
नीलनभसि रुचिरतरस्तरणिः
व्यपगतपंकसुखपथा धरणी ।
प्रचलति विश्वविजयकृतसर्गः
यात्रोत्सवरसिको नृपवर्गः ।
अर्थकामविजयेन सरागम्
गणयति धर्मपरो न च कायम् । ]

सूत्रधारः-अहो सांप्रतिकं वीरधर्मोत्तरं गीतवस्तु उपस्थानोचितं अत्र-भवतः कौरवमहावीरस्य । तथाहि

धर्माराधनतत्परेण विजितं येनार्थकामद्वयम्
शश्वद्ब्रह्मणि निष्ठितो नियमवाना यौवनादेव यः
भीष्मोऽयं कृतकार्यताप्रमुदितो विद्धोऽपि तीव्रैः शरैः
शय्यायामिव तेषु मोक्षरसिको लीनः कुरूणां गुरुः ।

( अवलोक्य ) अयं च महाभागोऽर्जुनो युववीरेण स्वपुत्रेण महापतिव्रतया सुभद्रया चानुगम्यमानः स्वकुलपितामहमेनमभिवादनेनानुग्राहयितुकाम इत एवाभिवर्तते । तद्वयमपि स्वनियोगमनुतिष्ठाम । (निष्क्रांतौ ।)

॥ इति प्रस्तावना ॥

( ततः प्रविशंति यथानिर्दिष्टा भीष्मार्जुनसुभद्राभिमन्यवः । भीष्ममभितश्च परिवारः ।)

अर्जुनः-( दूरतो विलोकयन् । ) अहो महानुभावः पितामहः ।

मर्मो विद्भिरुपार्दितोऽगरुहवत्प्रत्यंगमारोपितैः
सरवस्थो विजिगीषुणा बत मया छद्मार्पितैः सायकैः
शेते तन्मयतल्पके भगवतो ध्यानैकतानं मनो
बिभ्रद्ब्रह्मरसावगाहनपरो वीरो जयन्वेदनाः ।

(उपसृत्याभिवाद्य च ।) विजयतां पितामहः । एवं जयकामनया पूज्ये-ष्वपि पितामहपादेषु कृतापराधोऽपत्रपः पार्थोऽभिवादयते ।

भीष्मः—( हस्तमुद्यम्य )

चिरं जीव चिरं जीव वह गुर्वीं धराधुराम्
स्मरावतीर्णमात्मानं नरं भूभारहारिणम् ।

वत्स यच्चात्मा जयकामत्वाद्भवता गर्ह्यते तन्नोपपन्नम् । कुतः

तिष्ठञ्शिखंडिनि निरुद्धशरप्रयोग-
स्त्वामासिसादयिषुरेव रणे ससूतम्
सांग्रामिकेण विधिनाभिहतस्त्वयाहम्
त्वां दोषतो न खलु गंतुमना भवेयम् ।

सुभद्रा-( प्रणम्य ) एसा कुरुकुलवहू सुहद्दा अज्जपाएसु पणमइ ।
[ एषा कुरुकुलवधूः सुभद्रार्यपादेषु प्रणमति । ]

भीष्मः—वत्से वीरसूरेवासि । युवराजपदोचितस्य कुमारस्याभिमन्योर्विक्रमेण भूयोऽपि वर्धिष्यसे ।

अभिमन्युः-( नत्वा ) एषोऽहमभिमन्युः स्वकुलप्रवरचरणरजोभिरात्मशिरः पवित्रीकरोमि ।

भी०—सर्वथा पार्थवंशवर्धनो भाविष्यसि। ननु इत एहि । ( हस्तसमीपमेनमुपवेशयाति । )

सुभद्रा-सिज्झहिसुही पिदामहासिसा । भअवदा धोम्मेण पुरोधसा अणुचिट्ठिदपुंसवणा वच्छा सोण्हा णो उत्तरा पच्चासण्णप्पसूदी संपण्णत्ति । [ सिध्यभिमुखी पितामहाशीः। भगवता धौम्येन पुरोधसानुष्ठितपुंसवना वत्सा स्नुषा न उत्तरा प्रत्यासन्नप्रसूतिः संपन्नेति । ]

अभिमन्युः-( लज्जां नाटयति । )

भीष्मः—अवश्यं कुरुवंशवर्धनं सुतं जनयिष्यति ।

अर्जुनः—अनुगृहीताः स्मः ।

भीष्मः—धर्मैकदृष्टिर्नीतिविद्वत्सो युधिष्ठिरः स्थाने वत्समेनं युवराजसंज्ञयालंकरोति ।

अर्जुनः—निरतिशयः कोऽप्यार्यस्य वत्सेऽस्मिन्स्नेहो यद्विहाय द्रौपदेयानप्येनमेवोपलालयति ।

भीष्मः—किमत्र चित्रम् ।

भवांश्च वासुदेवश्च धर्मप्रेमास्पदं परम्
सुभद्रातनयेनेदं द्वयं त्वेकायनीकृतम् ।

ननु वत्स अभिमन्यो किमपि खलु प्रतीतोऽहं ह्यस्तनसंग्रामव्यतिकरेषु वत्सस्य विक्रांतचरितेन । जात

जननसमये दीप्तैस्तैऽङ्गैर्वयं कृतविस्मयाः
तदनु मधुरैर्हूंकारैस्ते स्मितैश्च विकस्वरैः
अनुकृतिमयैर्बाल्ये वीरायितैः कलजल्पितैः
कियदिव चिरं स्नेहाद्बद्धा हृताश्च बभूविम ।

स त्वं नवे वयसि संप्रति वर्तमानो
जातोऽसि जात पितुराजिविधौ सहायः
ऐच्छाम यत्तव पितुस्तव चैतदद्य
सिद्धं किलेत्युभयतोऽपि मुदं गताः स्मः ।

सुभद्रा—अज्जस्स पाअप्पसाएण वड्ढिदो एसो परंतवो होदुं अरिहदि ।

इदं दु गुरुअं अम्हाणं सोअं उप्पादेइ जं पंडवपालणाणुऊलमणसावि अज्जेण सपोत्तेहिं ज्जेव विरोहो आरद्धो अत्ता अ एव्वं किलेसपत्तदं णीदोत्ति । [ आर्यस्य पादप्रसादेन वर्धित एष परंतपो भवितुमर्हति । इदं तु गुरुकमस्माकं शोकमुत्पादयति यत्पांडवपालनानुकूलमनसापि आर्येण स्वपौत्रैरेव विरोध आरब्ध आत्मा चैवं क्लेशपात्रतां नीत इति । ]

भीष्मः—जाते दुरूहं खल्विदं त्वया वीराणां रहस्यम् । कुतः

भूत्वाजय्याविव रणरसाद्द्वंद्वसंग्रामकामौ
अस्मादन्यं न किल बलिनं वीरमालोकयावः
तेनाचार्योऽहमपि च भवद्वैरिपक्षे स्थितौ स्वः
तर्कातीतो न खलु सहसा ज्ञायते वीरधर्मः ।

अर्जुनः—( सविनयम् ) गौरवेण वर्धितोऽस्मि पितामहेन । कोऽहि त्रिलोक्यामप्यार्येण तुलामारोहति । वार्धकेऽपि एवं सहनत्वेन काष्ठागतविक्रमरसमगणिततनुत्राणमसंख्यशस्त्रास्त्रसंपातेषु तत्र तत्र तत्क्षणाविष्कृतात्मानं कच्चिन्नातितरां बाधत आर्यकं शरीरतापः ।

भीष्मः—उपपन्नमनुयुक्तम् ।

भीमसेनगदाघातैस्तव गांडीवमार्गणैः
सात्यकेर्दुःसहैरस्त्रैर्दुर्जीवं खलु मानुषैः ।

कथयामि तु रहस्यं क्लेशजयस्य ।

अविप्लुतो ब्रह्मणि मूलतोऽहं
नित्यं समभ्यस्तसमाधिकल्पः

न केवलं निर्जितदेहबाधः
स्वायत्तकालो मरणेऽपि चास्मि ।

विदितमेव ते यथा

यो वार्ष्णेयस्तव किल सखेति प्रसिद्धो जनेषु
त्वत्सारथ्यात्प्रकटयति न स्वं प्रभावं रणेषु
योगेशोऽसौ स्वपदनिरतांस्त्रायते मृत्युतोऽपि
धारावाहि श्वसितमनु तच्चिंतनं नस्तनुत्रम् ।

धन्यश्च भवानपि श्रीमता तेन दत्तहस्तः ।

अर्जुनः—सम्यगनुबोधितोऽस्मि । किमिव नोपकृतं नः श्रीमता वासुदेवेन ।

आबाल्यात्कलहैर्गृहेषु कलुषीभावे सुहृत्तस्स्थिरः
सिध्यै दिग्विजयस्य नः सहचरोऽभूद्राजसूयस्य च
उद्धर्ता शिशुपालपक्षशमनात्पश्चात्खलैर्बाधिताम्
द्यूतेऽस्मासु तु धर्मभीरुषु सखारक्षीत्सतीं द्रौपदीम् ।

अपि च

दृष्ट्वोपायत्रितयमपि यो मोघमस्मद्द्विषत्सु
घोरं योगव्यतिकरमधाद्धर्षणायोत्थितेषु
नूनं श्रीमान्युधि स मदरीन्निर्जयन्स्वौजसैव
स्वेच्छायत्तस्थितिलयगतिर्मां निमित्तीकरोति ।

एवमपि गर्भरूपानस्मान्गौरवेणार्यो लालयति ।

भीष्मः—

तस्मिन्नसि त्वमधिकं ननु बद्धभावो
येनातिवर्तितुमभूः क्षम एवमस्मान्‌
ईर्ष्या तु नात्र मम क्वापि पराभवेऽद्य
विज्ञाय कालगतिमस्मि समाहितोऽहम् ।

अवधारणीयं च यद्भवत्साहाय्यकेनैव भूभारहरणाय प्रवृत्तो भगवान्वासुदेवः । कृतकर्तव्याश्च वयं वीरव्यवहाराद्विरताः स्मः । भवद्भिस्तु सम्यङ्निजधर्मः परिपालनीयः ।

कुतः

यज्जीवितव्यमिह भृत्यसुखार्थमेव
नास्मात्परं वत जनेन विचार्यतेऽत्र
मोहो विहंति सुकृतोदयमेष तत्र
धेयो भवद्भिरवधानपरैर्विवेकः ।

अर्जुनः— यथा पितामह आज्ञापयति । किं च बहुना ।

प्रियः सुभद्रातनयोऽभिमन्युः
प्रेयो यतो नः खलु नास्ति किंचित्
स्वधर्मसिद्धौ यदि वास्य हानम्
अवश्यमास्मिन्न खलु क्षतिर्नः ।

भीष्मः—जाते वार्ष्णेयि अपि नाम भवती नात्रोदासीना ।

सुभद्राः— मम वि इदं ज्जेव्व बहुमदं । छत्तिआ हि अहं अज्जउत्तेण पुत्तएण अ मे क्षीहाउणा छत्तधम्मचरणेण अत्ता संभावणीओ त्ति

आसंसामि । जह्‌ा अज्जउत्तेण पडिण्णादं सो मम वि भावो ।
[ ममापि इदमेव बहुमतम् । क्षत्रिया त्वहमार्यपुत्रेण पुत्रेण च मे दीर्घायुषा क्षत्रधर्मचरणेनात्मा संभावनीय इत्याशंसे । यथार्यपुत्रेण प्रतिज्ञातं स ममापि भावः । ]

भीष्मः– सदृशमिदं वीरपत्न्या भवत्या ः

स्वभर्तृपुत्रभ्रातॄणां धर्मार्थेषु तनुत्यजाम्
यदा स्त्रियोऽभिनंदिन्यस्तदा धर्मः प्रवर्तते ।

तात अभिमन्यो । सम्यगिदमवधारणीयं निदर्शनं स्वपित्रोः यौ जीवितसर्वस्वभूतं भवतंमपि धर्मचरणे परित्यक्तुमविशंकितौ । आलोच्यतां यथातत्त्वं क्षात्रो धर्मः ।

आर्तानां परिरक्षणं शमवतां धर्मस्य संवर्धनम्
दुष्टानां दमनं प्रजाव्यवस्थितेर्न्यायेन संदर्शनम्
वात्सल्यं शरणागतेष्वविषमं वाक्कर्मणोर्वर्तनम्
संग्रामादपलायनं मरणमप्युक्तं रणे विक्रमैः ।

अभिमन्युः— यथा आर्यकप्रवरोऽनुशास्ति । इदमेवाहमप्याशंसे ।

वंशस्य कीर्तिमतुलस्य पितुश्च नाम
वीरप्रसूत्वमथ मातुरुदग्रयन्मे
प्राणव्ययेन रिपुभिः कृतसंगरस्य
भूयात्स्वधर्मचरणे प्रथितोऽधिकारः ।

भीष्मः– साधु वत्स साधु

प्राणानामपि हानेन धर्मसंरक्षणव्रतम्
पाल्यं हि क्षत्रियश्रेष्ठैर्येन लोको भवेत्सुखी ।

अर्जुनः- रणादुपरतेष्वार्यपादेषु उदासीने च कर्णमात्सर्यात्तभग्नव-त्याचार्ये विजयमधिकृत्य कुरुयोधान्प्रति निरुत्साह इवास्मि संवृत्तः ।

भीष्मः- वत्स नैवमनुत्साहेन भवता भवितव्यम् ।

योगैकनिष्ठितमना विनिवृत्तकाम-
श्चित्यो न तेऽहमधुनावासितैहिकार्थः
आचार्यकर्णकृपशल्यसुयोधनेषु
वीरेषु वीर भव साधुकृतावधानः १

यतः समत्सरेऽपि कर्णे आचार्य एवास्मदनंतरं कुरुसेनापतिपदे नियोक्ष्यते । नान्यस्येदं पदमौपायिकं यावदाचार्यो ध्रियते । न च केनाप्याचार्यः शक्यं समरे पराभवितुम् ।

( प्रविश्य )

पुरुषः-( उपसृत्याभिवाद्य च ) विजयतां पितामहः । विजयतां महाभागो धनंजयः । महाभाग महाराजोऽजातशत्रुरावेदयति ।

अर्जुनः-किमाज्ञापयति ।

पुरुषः-पांडवविपक्षपक्षपातिभिस्त्रिगर्तादिभिः क्षत्रियवीरैः संघेन शपथः कृतः । वयमर्जुनं दूरतररणैकदेशे पृथगेव ससारथिमायोध्य कुरुपतिं दुर्योधनं विजयाविश्रब्धं कुर्मह इति । तदेषां संशप्तकानामभियोगार्थं मंत्रकरणाय कुमारः शिबिरमुपायातु । तत्रभवाञ्श्रीमान्वासुदेवोऽप्यत्रैवोपस्थास्यत इति ।

अर्जुनः-सुव्यक्तं संशप्तकैरेतैः । अहमप्येनान्संभूययोधिनः संभावयितुं

कृतोत्साहोऽस्मि ।

भीष्मः—यत्किंचिदिदं वत्सस्य ।

पुरुषः—श्रूयते चापसर्पमुखात्कुरूणां सेनानीपदं सिंधुराजेन वृद्धक्षत्रात्मजेन जयद्रथेन सेर्ष्यमुत्प्रेक्ष्यत इति ।

भीष्मः—धिगेनमनात्मज्ञम् । विद्यमानेषु भारद्वाजादिष्वप्रतिरथेषु किमिदं पौरोभाग्यमुद्भाव्यते सैंधवेन ।

सुभद्राः—सो सो वणवासे अज्जाए मम बहिणीए पंचालीए धंसओ छत्तिआवसदो महप्पेहिं आचारिज्जादिहिं समत्तणं अधिरोढुं इच्छदि । [ स स वनवास आर्याया मम भगिन्याः पांचाल्या धर्षकः क्षत्रियापसदो महात्मभिराचार्यादिभिः समत्वाधिरोढुमिच्छति । ]

अर्जुनः—शकुनिना मोहितमतिर्धार्तराष्ट्रोऽमुं क्षत्रबंधुमप्याचार्यादीनतिलंघयेत् । तथाप्येवमुदीर्णोऽपि स्वदोषेणैवाचिराद्विनिपातमुपैष्यति सैंधवः । कश्च नामासावार्येण भीमसेनेन सात्यकिप्रभृतिभिश्चास्मद्वीरैर्योद्धुम् ।

अभिमन्युः—बालेन मया शुद्धांतेषु नैकवारं श्रुतपूर्वोऽस्य दुरात्मनोऽपचारः । चिरजाता च मे मतिरेनं संग्रामे स्वयमभियोक्ष्य इति ।

भीष्मः—वत्स अर्जुन न सेनानीत्वं सैंधवस्य संभाव्यते । तथापि विदितमेव भवतामेष धर्मकंटको धर्मयुद्धसमयानतिक्रम्य कूटप्रयोगानप्याचरिष्यतीति । एष एव तावत्पांडवपक्षस्येदानीं द्विषदग्रणीः । आचार्यश्चोरीकृतपक्षाभिमानेनेमं वा सौबलादीन्वा सर्वात्मना गोपायिता । न च त्वदितरैराचार्येण द्वंद्वाभियोगः शक्यः ।

अभिमन्युः—ननु तातपादेषु तैः संशप्तकैर्व्यग्रेष्वहं तातवृकोदरपार्श्वस्थः

पांडवसैन्यं यथानिदेशं व्यवस्थाप्यामुं सेनानीभ्रुवं योधयिष्ये । याव-
त्संशप्तकध्वंसमाचार्यः कथमपि निरुध्येत ।

भीष्मः-उपपन्नम् । वत्सार्जुन अनुष्ठीयतां युधिष्ठिरादेशः । संप्रधा-
रय चेदम् ।

अर्जुनः-( सांजलिबंधम् ) अवहितोऽस्मि ।

भीष्मः-

धर्मोऽद्य ग्लानकल्पो दुरितपरिवृतोऽभ्युत्थितश्चाप्यधर्मः
दुष्टात्मत्रस्तचित्तास्तपस उपरतास्त्राणशून्याश्च संतः
जित्वातः स्नेहमोहानवहितमतिभिर्धर्मसंस्थापनार्थम्
आविर्भूतेन भाव्यं सह मुरारिपुणा यत्नवद्भिर्भवद्भिः ।

अर्जुनः-एवं करिष्यामहे । ( उत्थाय ) विजयतां पितामहः ।

भीष्मः-विजयस्व ।

( सर्वे उत्थाय भीष्मं प्रदक्षिणीकृत्य प्रणम्य च प्रतिष्ठंते । )

अर्जुनः-भद्र आर्यशिबिरमार्गमादेशय ।

पुरुषः-इत इतो भवंतः । ( निष्क्रांताः सर्वे । )

इत्याशीर्नाम प्रथमोऽङ्कः ।

# वीरधर्मदर्पणनाटकम् ।

## द्वितीयोऽङ्कः ।

( ततः प्रविशति कंचुकी । )

**कंचुकी**—( मंदं परिक्रम्य निश्वस्य- )

साम्राज्याद्गुरुकृत्यसंकुलजने यः कौरवाणां गृहे
वार्धक्यं समुपेयिवानधिकृतो विश्रब्धकार्येष्वहम्
गोपायन्गलिताश्रु लोचनयुगं सोऽहं शुचा विक्लवः
उद्वीक्ष्याशुविनाशिनं कुरुपतिं तिष्ठाम्यधोदर्शनः ।

हंत भोः ।

बाल्यादेव सुयोधनेन कलहो यः सात्त्विकैः पांडवैः
आरब्धः क्रमशोऽस्त्ययं परिणतः संग्रामरूपेण सः
तत्रायं प्रथमो महान्परिभवो भीष्मावपातो रणे
सर्वक्षत्रियवर्गनाशपिशुनो नक्षत्रपातोपमः ।

अतर्क्यप्रभावः खल्वसौ मध्यमपांडवः शिखंडिव्यवधानक्षणमात्रासादितरंध्रोऽप्रतिरथं पितामहं शरवर्षेणावशमकरोत् । अद्य च भूयोऽपि विश्रुतोऽस्य प्रतापोत्कर्षः ।

एकेनैव ससूतेन सर्वे संशप्तका यतः
संत्रासिताः शरव्रातैः सहसा त्याजिता रणम् ।

पुनश्च स्वसैन्यैः संगम्य कौरवेभ्योऽतिघोरं दत्तमनेनायोधनम् । यदि च तत्रभवतो वीरप्रवेकादाचार्यादन्योऽद्य कुरुसेनापतिरभविष्यन्नूनं सकलमस्मद्बलं पार्थासादने संशयगतमभविष्यत् । एवमप्यत्र

प्रतिद्वंद्वे युधिष्ठिरं जीवग्राहं ग्रहीष्यामीत्याचार्येण युद्धारंभे विहिता प्रतिज्ञा पार्थप्रत्यागमप्रत्यूहवशान्नैव किल तीर्णा । अनेनाचार्याभिषंग-व्यतिकरेण पितामहनिपातानुपदमेवोपनतेनास्मत्स्वामी महाराजसुयो-धनोऽतितरामुद्विग्नः किंकर्तव्यताशून्य इव तत्रभवता प्रियेण सुहृदा मंत्रकुशलेनांगराजेन श्रीमता कर्णेन मंत्रयितुमना मामिदं मंत्रशिबिरं विविक्तीकर्तुमादिष्टवान् । तद्यावन्निदेशमनुतिष्ठामि— ( नेपथ्याभिमुख-मवलोक्य ) भो भो दौवारिकाः ननु शीघ्रमिदं मंत्रशिबिरं निर्जनं क्रियताम् ।

अनवाप्तसिद्धिररिनिग्रहोद्यमे
सुतरां सचिंत इह मंत्रणोत्सुकः
कुरुनायकोऽङ्गपतिना सहैकको
निभृतं मुहूर्तमुपवेष्टुमिच्छति ।

आकाशे- किं ब्रूथ तथा कृतमिति । तदहं शिबिरद्वारमध्यासीनो भवामि । भवद्भिर्बहिर्द्वारं स्वनियोगः प्रतिपाल्यः । ( परिक्रम्य विचिंत्य च । ) यथाहं पश्यामि तथाचार्येण कथमपि पुनरेव रणादनपगमितेऽर्जुने कुरुवीरा-णां प्रकर्षो न संभाव्यते । ते च त्रिगर्तप्रमुखाः संशप्तकाः प्रोत्सा-हितास्त्यक्तात्मानः शौर्याभिमानादेनं पुनरप्याह्वास्यंते । अये एष खलु

महाराजः श्रीमांस्तुमुलरणकर्मक्षमवपुः
मुहुर्मानात्सत्स्वप्यपगतनयः पांडुषु हठी
महासारो मंदं धरणिमिव रक्षन्पदभरात्
गदाधारोऽभ्येति श्रमजड इवेतः परिभवात् ।

( प्रविश्य यथानिर्दिष्टः सुयोधनः )

सुयोधनः—( आत्मगतम् ) दुरंतः खलु राज्याधिकारः ।

अनयरचितकूटैः क्लेशनैर्दायभाजाम्
अभिमतमधिकारं स्वार्थमापादयंतः
अधिगतसुखभोगाः पूर्वमैश्वर्यरक्ताः
स्वदुरितफलमेवं प्राप्नुवंतीह पश्चात् ।

यत्तथात्माधिकारस्थैर्येऽविभावितशंकोऽभिमानवानहं निजजनविनाशप्रसंगेनानेनाभिमानशून्य इव संवृत्तोऽस्मि ।

कंचुकी—( उपसृत्य ) विजयतां महाराजः । इदं विविक्तं मंत्रशिविरम् ।

सुयोधनः—( ध्यानमंदं परिक्रामति । )

कंचुकी—अतीव खलु विमनायते महाराजः । तदपि नामास्य जीवितप्रियतमोऽगराजस्त्वरयोपगमिष्यति । ( विलोक्य ) हंत अयं श्रीमान्विक्रमैकनिष्ठोऽगराजोऽभ्युपायाति ।

पुराज्ञातो जात्याधमकुलविवृद्धः किल परैः
कृतावज्ञः सद्यो नरपतिपदं योऽधिगमितः
कृतज्ञस्त्यक्तात्मा कुरुषु रणभूमावनुपमः
महाराजस्यैको जगति हितदर्शी सुहृदयम् ।

( प्रविश्य कर्णः )

कर्णः—अहो एष नितांतविमनस्को महाराजसुयोधनो मामेवापेक्षमाणस्तिष्ठति । असंख्यसामंतमंडलेश्वरस्याप्यस्य कुतस्त्येऽपि मय्या बाल्यादेतावान्स्नेहातिशयो यत्स्वभ्रातॄनपि विहाय मामेव सकलविश्रंभ-

भाजनमिति बहुमन्यते ।

अदृष्टकुलसंभवं रणरसैकबद्धस्पृहः
स्वमांडलिकमंडनां ननु निनाय यो मां पुरा
कृतांतगतिविक्लवं न यदहं तमुत्साहये
धिगस्तु ननु जन्म मे बत कृतघ्नतादूषितम् ।

कंचुकी–( उपगम्य ) विजयतामंगराजः। ननु एष महाराजो विक्लवांतः-करणोऽत्रभवंतमेवापेक्षते । ( निष्क्रांतः । )

सुयोधनः-तदपि नाम मे प्रियतमः सखा अंगराजो द्रुतमिह संनिहितो भवेत् ।

कर्णः–( सत्वरमुपसृत्यालिंग्य च । ) विजयतां महाराजः । महाराज ननु विसृज्यतामेष प्राकृतजनसाधारणः खेदः । उत्सवोऽयं भुजबलवतां नो यदिदं प्रवृत्तं दीर्घसंग्रामसत्रम् । तत्किमिति विषादमनुप्रपन्नो भवान् ।

सुयोधनः–( कर्णेन सहैकासन उपविश्य ) ननु प्रियवयस्य। युद्धरसिका वयं युद्धमुत्सवमेव जानीमहे। न च स्वयं तत्राहं नीरसः । किं तु अद्य तेन आचार्यस्य बुद्धिकृतेन वार्धक्यनैसर्गिकेण वा शैथिल्येन सविशेष-हताशंसो विषण्णतरोऽस्मि संवृत्तः । कुतः

शय्यां शांतनवे श्रिते शरमयीं त्वन्मंत्रवाक्यादहम्
हित्वा त्वां वृतवान्बलाधिपपदे विश्रब्धचित्तो गुरुम्
उच्चैर्धर्मविनिग्रहाश्रवमसौ प्रोद्घुष्य संरंभवान्
नालं तत्र भवेदितीक्षितवतो धैर्यं व्यपैतीव मे ।

या चाचार्येण पुनरारूढा प्रतिज्ञा ध्रुवं पांडववीराणामेकं महारथं श्वः पातयामीति तामपीदानीं न मे मनः श्रद्दधाति ।

कर्णः—महाराज मैवम् । सांतरा हि सा युधिष्ठिरनिग्रहप्रतिज्ञाचार्येण कृतासीत् । अर्जुनानुपालितस्य युधिष्ठिरस्य ग्रहणमशक्यमन्यथा शक्यामिति । न च मां विना कुरुवीरेषु कोऽप्यर्जुनेन योद्धुमुत्सहते । आचार्यो हि यावदर्जुनो गुरुं प्रतियुध्येत तावच्छिष्योऽयं प्रियतमो म इति वात्सल्येनाविदितोपजातपक्षपातो मार्दववशोऽर्जुनसहायं युधिष्ठिरं नैव ग्रहीतुं पारयेत् । एवं नैष चारित्रदोषः अपि तु स्वभावदोषो यं पुरुषो न लंघितुं क्षमः ।

सुयोधनः—तत्स्वभावेनास्मत्पक्षभावहीनस्य सैनापत्यं किं भवतावश्यतया प्रतिपादितम् ।

कर्णः—एतदपि न्याय्यम् । प्रथमं तावन्मां विहाय अप्रतिद्वंद्विक आचार्य्य इति सर्वत्र विश्रुतम् । ततः सर्वेषामपि सामंतचमूपतीनामाचार्ये पितामहादनु बलीयान् भावः । वृद्धतमत्वाद्योग्यत्वात्क्रमप्रसक्तात्वाच्च आत्मानमवगणयतैव मया सैनापत्यवरणविषये न्याय्यो मंत्र उदीरितः । प्रतीक्ष्य एव कश्चित्काल इति । एषा च लोकव्यवहारपद्धतिरपरिहार्यत्वादवश्यमवेक्षणीयेति । प्रशांते चाचार्यस्य युद्धोत्साहे अहं स्वयमेव अग्रतोभूयार्जुनं परिभूय विजयसिद्धिं ते प्रतिपादयितास्मि । इयं च द्वितीया तत्रभवतः प्रतिज्ञा न मोघीभवितुमर्हति । यतो विदितस्वभावदोषेण तेनोपकल्पितो भूयोऽप्यर्जुनापनयनेऽभ्युपायः । ते त्रिगर्तादयः संशप्तकाः कुरुक्षेत्रं दाक्षिणेन विप्रकृष्टादर्जुनमाहूयाद्यैकवारं पराभूतास्ते पुनः स्वपरिभवनिर्या-

तनाय तत्रैवैनं पुनराह्वातुं योधयितुं चाचार्येण प्रचोदिताः कृतोत्साहास्तं तत्रैव पुनः संग्राममव्यग्रं करिष्यंति । तत् श्वःश्रेयसमियं द्वितीया प्रतिज्ञेति विद्धि ।

सुयोधनः—कृतधीस्त्वं यथा वदसि तथास्तु ।

( प्रविश्य )

कंचुकी—विजयतां महाराजः । तत्रभवतः सेनापतेराचार्यस्य सकाशात्संदेशहरः पुरुषः प्राप्तः ।

सुयोधनः—अविलंबितः प्रविशतु ।

( कंचुकी निष्क्रम्य पुरुषेण प्रविशति । )

पुरुषः–( उपसृत्य ) विजयतां महाराजः । तत्रभवानाचार्यः कुरुसेनापतिः महाराजाय संदिशति । श्वः किलार्जुनस्यासंनिधानादवश्यं मे द्वितीया प्रतिज्ञा सेत्स्यति । तथा हि

दुर्धर्षो विजयाय ते कुरुबलव्यूहः कृतांतोपमः
चक्राख्यो रचयिष्यतेऽरिषु न वै यन्निर्गमज्ञः पुमान्
यो भ्राम्यन्शितधारशस्त्रनिकरैस्त्वष्ट्रीयचक्रक्रमः
विष्वक्तर्स्यति वेगवानरिबलस्कंधानकुंठद्युतिः ।

कर्णः—अमोघचंक्रमणश्चक्रव्यूहः । अत्युदारमुपकल्पनमाचार्यस्य ।

पुरुषः—अपरं च एवंविधोऽसौ व्यूहः ।

आलंबितात्मबल एकक एव वीरो
यावत्प्रविश्य न हिनस्ति तदीयनाभिम्

व्यूहो निबद्धविवरो बलिभिः स्वकीयैः
न स्वक्रमाद्विरतिमेष्यति हिंस्रकर्मा ।

व्यूहभेदपक्षे एकमहारथपातः । अभेदपक्षे सर्वेषामेवारीणां संहार इति ।

सुयो—एकतरत्वेऽपि प्रियमेव नः ।

कर्ण—एकं महारथं पातयामि इति प्रतिज्ञायाः साधकोऽनुत्तमोऽयं कल्पः । न चास्य व्यूहस्य भेदने पांडुषु पार्थादन्यः कोऽपि क्षम इति तर्कयामि ।

पुरुषः—भूयोऽप्याचार्यः संदिशति ।

अश्वत्थामविकर्णशल्यसहिताः कर्णः कृपोऽहं तथा
त्वं दुःशासनसौवलप्रभृतिभिर्व्यूहारभूमिं श्रिताः
अंतःप्राप्तमरिं क्षणेन विलयं नेष्याम एकस्तु मे
शक्तो रंध्रपिधानरक्षणविधौ वीरः समन्विष्यताम् ।

इति ।

सुयोधनः—व्यूहद्वारस्थानव्यापृतेषु सर्वेष्वेवातिरथेषु को न्वन्विष्यताम् । (चिंतयति) भवतु क्षिप्रमाचार्याय विज्ञापयिष्यामीति प्रतिनिवेद्यताम् ।

(पुरुषो निष्क्रांतः सह कंचुकिना ।)

सुयोधनः—अंगराज । दुर्लभमविघ्नं मनोरथानाम् । सकलेष्वपि प्रथितपराक्रमेष्वस्मद्वीरेषु तत्तत्स्थानव्यग्रेषु महावीर्यपराक्रमस्त्वयाचार्येण वा तुल्य एको व्यूहरंध्ररक्षणक्षमो न कोऽपि मे संदृश्यते । तदत्र पुनः किंकर्तव्यतामूढतामापन्नोऽस्मि ।

(प्रविश्य)

कंचुकी–विजयतां महाराजः ।

सुयोधनः–हंत गृहीतो जयशब्दः । आर्य किं कथयसि ।

कंचुकी–तत्रभवतः सिंधुराजस्य सकाशादुलूको दूत उपस्थितः ।

सुयोधनः–सिंधुराजस्य सकाशाद्दूत आगतः । न सिंधुराजः स्वयमुपगत इति शंकास्थानमिव प्रतिभाति ।

कर्णः–नास्य स्वयमुपागमने प्रतिबंधः । उपचारातिक्रमश्चैष यद्दूतमुखेन महाराजमभिभाषितुमिच्छति जयद्रथः ।

सुयोधनः–कच्चिन्न किमप्यत्याहितं यत्स्वयं सिंधुराजो नोपस्थितो दूतं प्रेषयति ।

कंचुकी–सोत्साहमुखवर्णो दृश्यते दूतः । तेन भद्रमुपलक्षये नात्याहितम् ।

सुयोधनः–भवतु शृणुमस्तावत् । प्रवेशय ।

( कंचुकी निष्क्रम्य दूतेन सह पुनः प्रविश्य । )

दूतः–( उपसृत्य ) विजेउ कुरुराओ । देव अम्हाणं महाराओ अत्तभअंतमावेदेदि । [ विजयतां कुरुराजः । देव अस्माकं महाराजोऽत्रभवंतमावेदयति । ]

कर्णः–( अपवार्य ) धिक् निरुपचारताम् । न नाम भ्रांतो जयद्रथः ।

सुयोधनः–( आत्मगतम् ) धिक् धिक् सामंतभूतोऽपि मे सिंधुराजः महाराजशब्देनोपचर्यंते । आवेदयति च माम् । न विज्ञापयति । अथवा भवति स्वामिपक्षपातः सेवकानाम् । ( प्रकाशम् ) किं विज्ञापयति ।

दूतः–जइ अत्थि मे किंपि रहस्सं कुरुवदिणो एआइणो ज्जेव्व णिवेअणीअं । ता समुचिदमंतट्ठाणे अत्तभअंतं पेक्खिदुं इच्छामि त्ति । [ यथास्ति मे किमपि रहस्यं कुरुपतेरेकाकिन एव निवेदनीयम् ।

तत्समुचितमंत्रस्थानेऽत्रभवंतं द्रष्टुमिच्छामीति । ]

सुयोधनः–( अपवार्य ) अंगराज यथाहं तर्कयामि तथास्मत्संकल्पफलायैवेदं किमपि भविष्यति । तद्यावत्परित्यक्तोपचारमप्येनमुपच्छंदयामि । तावद्भवानपि मद्रेश्वरेण संमंत्र्यैकवीरविषये मामावेदयितुमर्हति ।

कर्णः— तथा । विजयतां महाराजः । ( निष्क्रांतः । )

सुयोधनः–उलूक उच्यतां सिंधुराजः समुचितस्थानगतो भवंतं प्रतिपालयामीति ।

दूतः–तह । [ तथा । ] ( परिक्रामति )

सुयोधनः-( स्वगतम् ) किं कार्यमुद्दिश्य जयद्रथो मंत्रयितुकामः स्यात्। ( चिंतयन् स्थितः । )

दूतः–णूणं अम्हाणं सामिणो ज्जेव्व साहज्जादो कुरूणं विअओ भावी । तह हि विणिद्दो ज्जेव्व तत्तभवं एआरिसासअं किंपि किंपि पअब्भमाणो सोच्छाहं इमं णिसं गमेइ । दीसइ मम वि एत्थ अब्भुदअदुवारअं । सुदं हि मए णीदिसत्थाकिदपरिचिअस्स तादस्स मुहादो । [ नूनमस्माकं स्वामिन एव साहाय्यात्कुरूणां विजयो भावी । तथा हि विनिद्र एव तत्रभवानेतादृगाशयं किमपि किमपि प्रगल्भमानः सोत्साहमिमां निशां गमयति । दृश्यते ममाप्यत्राभ्युदयद्वारम् । श्रुतं हि मया नीतिशास्त्रकृतपरिचयस्य तातस्य मुखात् । ] ( संस्कृतमाश्रित्य )

यदत्ति परिधत्ते वा यत्स्थानं च निषेवते
तत्तत् क्षणमुज्झित्वा भर्तुर्भृत्या हि भुंजते ।

ण अ मुक्खाणं त्रिअ ससरीरणिरवेक्खो मे सेनापरिस्समो । सुदं हि

मए तादस्स मुहादो । [ न च मूर्खाणामिव स्वशरीरनिरपेक्षो मे सेवापरिश्रमः । श्रुतं हि मया तातस्य मुखात् । ] ( पुनः संस्कृ० )

मूर्खाः केचिदुपासतेऽत्र मृगयुश्वाना इव स्वामिनम्
ये मोहाज्जहति प्रियानपि निजप्राणांस्तदर्थार्जने
ते सुज्ञा मम संमता निजहितं ये वर्धयंतः सदा
सेवावृत्तिमुपाश्रिता मृगपतौ नाथे शृगाला इव । ( निष्क्रांतः । )

( प्रविश्य )

कंचुकी–विजयतां महाराजः । सिंधुराजः समुपा–

( इत्यर्धोक्ते प्रविश्य )

जयद्रथः–विजयस्व विजयस्व कुरुपते । ( सचाकितं निष्क्रांतः कंचुकी । )

सुयोधनः–( समागच्छन्ध्यम् ) अहो बत सिंधुराज । ननु उपचारातिक्रमोऽनुचितो भवादृशाम् । राजभिः स्थितिभेदः सर्वथा परिहरणीयः ।

जयद्रथः—राजन् नष्टप्राये निजपक्षेऽतिक्रांतोऽवसर उपचारस्य । तथापि यावत्सिंधूनामधिपतिर्जीवति तावन्न कदापि तव धैर्यहानिर्भविष्यति । यत इदानीम्

भयाद्वा स्नेहाद्वा रिपुहितकृता नाम भवता
नियुक्तस्य श्लाघ्ये गुरुणि कुरुसेनापतिपदे
वयं वृद्धस्यैवं कृपणचरितालोकनधियम्
त्यजामः संद्रष्टुं स्वजनविलयो नेष्यत इति ।

सुयोधनः–अपूर्वैवाद्य ते प्रकृतिः प्रतिभाति । किं नु सिंधुराज किं सत्यमेवाद्यावधि निजबलापह्नवः कृतो भवता ।

जयद्रथः—श्रूयताम् अस्मदुक्तार्थः ।

गतः पातं भीष्मो विगलितवया अर्जुनशरैः
अथेष्टो वो द्रोणो जरठ इति यद्वा गुरुरिति
स भीत्वा पांडुभ्यो रणभुवि पलाय्यैव जयति
खलूक्त्वा तत्तन्नः सततमवनीया हि कुरवः ।

सुयोधनः—अंग सिंधुराज । सौम्यभावमुपगम्य तावत्कथय । अस्ति वै-तावदैश्वर्यं त्वयि । ईदृशेन विनैव किलाद्य संशयितोऽस्मद्विजयः । श्वो हि महांश्चक्रव्यूहो विरच्यते यत्र कर्णाचार्यतुल्यवीर्यस्ततोऽपि वाधिकः कोऽपि वीरोऽस्माकमिष्टः । न च त्वद्वीर्यमपलपामि । किं तु कार्य-विशेषमुद्दिश्य यदि मां प्रत्याययिष्यसि तत्प्राप्तकार्पण्यं मे हृदयं समाहितं भविष्यति ।

जयद्रथः—यद्येवं श्रूयताम् ।

सुयोधनः—अवहितोऽस्मि ।

जयद्रथः—कच्चिन्न विस्मृतं भवता यथा युष्माभिर्दासीकृतामननुभुज्य परित्यक्तां पांचालीमपहर्तुकामोऽहं तान्षंढतिलान्पांडवाननु परिमे-यानुचरो वनं प्रविष्टः ।

सुयोधनः—अस्मत्प्रियमेवेदं कथं विस्मर्यते ।

जयद्रथः—तां संभ्रमेणापहरंश्च तैः कृतदीर्घकोलाहलैरभियातस्तत्सम-यं तां विहाय अहमपगतेषु तेषु एवं व्यचिंतयम् । यत्र

चौरैरिवास्मि मुषितो मिलितैर्वराकैः
स्त्रीरत्नमेवमथ तत्प्रतियातनार्थम्

निष्ठाबलेन समयेन तपश्चरित्वा
प्राप्स्याम्यहं पशुपतेर्विजयप्रसादम् ।

सुयोधनः—उदारो व्यवसायः ।

जयद्रथः—स हि हठसाहसलुब्धो देवो दोषादोषावविचारयन् शीघ्रं प्रसीदति कष्टतपःसु पुरुषेषु । नापि तस्या दासवधूट्या धर्षणे कोऽपि दोषः । कुतः

सा मुक्तास्रगिवाधमैरधिगता पाण्डोः सुतैर्वायसैः
या हंसैरिव निर्जिता पणबलाद्दासीकृता कौरवैः
दौर्भाग्यात्पुनरेव पंच बटुकान्भोक्तुं प्रविष्टा वनम्
तां तेभ्यो गणिकामिवापहरतः को वापचारो मम ।

सुयोधनः—सम्यग्दृष्टम् । अत एव दुःशासननिर्विशेषस्त्वयि मम स्नेहः ।

जयद्रथः—अथैवं निश्चित्य महत्तपश्चरितम् । यदंते ध्यानसंदर्शितात्मना परितुष्टेन पार्वतीप्रियेण भक्तिप्रहाय मे किंचित्सांतरोऽयं वरो वितीर्णः । यथा

सिंधुराज तपःक्लेशैस्तुष्टोऽहं गुरुभिस्तव
जिष्णावपेते शेषांस्त्वं सकृज्जेष्यसि पांडवान् ।

सुयोधनः—(जयद्रथमालिंग्य) हंत प्रियं नः प्रियं नः ।

जयद्रथः—तत्स्नेहान्निजममितं प्रकाश्य वीर्यम्

शत्रूंस्ते यमसदनं प्रति प्रहित्य
राज्यं श्वो व्यपहतकंटकं विधाय
कर्तास्मि प्रभुमिह निर्वृतं किल त्वाम् ।

सुयोधनः–एवमेव । त्वद्विजयविघ्नभूतः पार्थोऽप्याचार्येण पुनः संशप्तकाह्वाननिमित्तेन समरादपनीयत एव ।

जयद्रथः—अत एव रहसि मंत्रणयोग उपकल्पितः ।

तच्छ्वोऽस्ति विजयो राजन् सिंधुराजकृतस्तव
निमित्तं सा भवत्वत्र द्रोणकर्णकृपावली ।

( पुनः पुनः तदेव पठन्साटोपं परिक्रामति । )

सुयोधनः—( स्वगतम् )—ननु वरप्रभावेणानेन विजयस्तु नो निश्चितः । किं तु इदं पुरतश्चिंतनीयम् ।

अदृष्टपूर्वो विजयः केवलात्मबलाश्रयः
उन्मादयिष्यति ह्येनं कलहायैव भूयसे ।

( प्रकाशम् ) एष जल्पोऽपि सुखावहः । किमु प्रत्यक्षसिद्धिः ।

जयद्रथः—सिद्धिरेव इयम् । ( तदेव पुनः पठित्वा ) श्रूयतां भूयोऽपि संशयच्छेदि वचनम् ।

विगलितधृतिः शोकावेगान्मुमूर्षुरिव स्वयम्
मम शितशरैर्याता नाशं द्विषां ततिरल्पका ।
किमु बहुतरं वाच्यं श्वश्चेज्जयो भविता न ते
तिलपरपदं पार्थेषूक्तं भवेदुचितं मम ।

तदिदानीं लब्धाश्वासो वीतचिंतः प्रकृतमनुसरतु भवान् । अहमपि विजयं प्रति कृतोद्यमो भवामि ।

सुयोधनः–तथा । ( निष्क्रांताः सर्वे । )

व्यूहोपन्यास इति द्वितीयोऽङ्कः ।

# वीरधर्मदर्पणनाटकम् ।

## तृतीयोऽङ्कः ।

( ततः प्रविशति दूरात् उलूकेनानुगम्यमानो जयगर्वितो जयद्रथः । )

जयद्रथः—अहो अनुगुणो विधिः । पराहतपूर्वैरपि तैर्मृत्पिंडबुद्धिभिः संशप्तकैर्दूरापनीतेऽर्जुने महेश्वरवरबलादुदग्रतरप्रभावेण मया कथंचिल्लब्धरंध्रो व्यूहांतःप्रविष्ट इतरैरजय्यः सुभद्रासुतो रंध्रं पिधाय व्यूहांतरेव कुरुसैनिकहस्तैर्व्यापादितः । येनावदानेनाश्रुतपूर्वः कौरवाणां विजयो मां सकलसंमानैकायतनीकरोति । तेन च समत्सरेणाचार्येण वरबलहेतुकामस्मत्प्रशस्तिं कुर्वता कथंचिद्गोपायितोऽप्यस्मत्प्रभावः सर्वतः प्रकाशीकृतः । भवतु अद्य विजयिनामग्र्यसत्कारमहं प्राप्नोमीति समुज्ज्वलितो मया वृद्धक्षत्रान्वयः । ( परिक्रम्य ) अथ कथमद्यापि अस्मद्विजयपूजासंमानविधानार्थं सुयोधन इदं वीरपूजाशिविरं नाभ्येति । उलूक गच्छ ब्रूहि मद्वचनात्कुरुपतिं भवदभ्यागमकांक्षी विजयी सिंधुराजो वीरपूजाशिविरसंनिकृष्टे संनिहित इति ।

उलूकः—( उपसृत्य ) जह भट्टा अण्णवेदि । [ यथा भर्ताज्ञापयाति ]

( निष्क्रान्तः । )

जयद्रथः—अद्य च द्रौपदीहरणप्रसंगात्पांडवहतकेभ्यः प्राप्तनिकारस्य मे महांतं परितोषं करोति सौभद्रवटोर्वधः । अस्ति चाद्य विश्वस्तेनास्मदनुचरेणोलूकेन मदादेशादस्यामेव वेलायां स्वपराभवनिर्यातनकामैः आतनूपातं व्यवसितसंग्रामैः संशप्तकैश्चिरविलंबितस्य स्वशिबिरं प्रतिनिर्वतमानस्य निशातमोवशात् यथाकथंचिद्वा अविदिताभियुक्त-

स्य ससारथेस्तस्यार्जुनहतकस्य गुप्तवधार्थं शंकुकर्णो नाम गुप्तघाती नृशंसकर्मोपजीवी राक्षसगणपालः नियोजितः ।

समरसमयस्य यद्यपि दूष्यमिदं कर्म मे विरुद्धत्वात्
फलतो दोषादोषावुच्येते साधनस्य नयविद्भिः ।

( सवैलक्ष्यम् ) तथाप्यस्मिन्गूढसाहसे शंकुकर्णस्तं धूर्ताग्रण्यं सारथिं वंचयितुं प्रभवति वा न वेति शंका न मे हृदयादपयाति । अपि नामार्जुनहतकः पुत्रवधवृत्तवज्रपातेन प्राणाञ्जत्यात् । नाहं खलु किमपि तेन सह समरव्यतिकराय स्पृहयामि । यदि तु पुत्रे मंदानुराग इव नात्मानं घातयेदवश्यमसौ दुरात्मा मयि दारुणमनुष्ठातुं व्यवस्येत् । न तथाप्येनं गणयेयं किं तु स कपटपटुर्गोपालापसदः पांडवैरास्त्रीकुमारं चाटुशतैः पूजितो नयानयावचिंतयन्येन केनाप्युपायेन तानेव गोपायति । ( सचिंतं परिक्रम्य ) हा धिक् । निर्गलित इव मे चैतन्यात्स वरप्रभावः । अथ वा युद्धश्रमेणात्तसार इव मे प्रभावो ध्वंसते ।

( प्रविश्य )

उलूकः– जेउ भट्टा । एसो कुरूणं राआ सपुत्तस्स लक्खणस्स वहेण सोआउलो वि समरकिलेसमुच्छिअं दुस्सासणं भादअं कहं वि पच्चावण्णसंणं उवचरिअ सल्लकण्णदोणिहिं अणुगम्ममाणो इदो जेव्व अहिवट्टइ । [ जयतु भर्ता । एष कुरूणां राजा स्वपुत्रस्य लक्ष्मणस्य वधेन शोकाकुलोऽपि समरक्लेशमूर्च्छितं दुःशासनं भ्रातरं कथमपि प्रत्यापन्नसंज्ञमुपचर्य शल्यकर्णद्रौणिभिरनुगम्यमान इत एवाभिवर्तते । ]

जयद्रथः—( आत्मगतम् )अहो कृतागस इव मे विजृंभणमनर्थकल्पनाजालस्य । यदिदानीं विजयपूजाभाजनीभूतमात्मानं विस्मृतवानस्मि । (विलोक्य) अये निरुत्साहा इव सर्वेऽपि एते मंदायमाना इतोऽभ्युपायांति । यथा तथास्तु । (प्रकाशम्) उलूक सावधानेन त्वयात्मनियोगः प्रतिपालयितव्यः। आवेद्यं च मेऽवसानं कार्यस्य ।( सगर्वं परिक्रामति । )

उलूकः–जह भट्टा आणवेदि । [ यथा भर्ताज्ञापयति । ] (निष्क्रांतः।)

( ततः प्रविशति मंदोत्साहः सुयोधनः । )

सुयोधनः— (निश्वस्य)

दृष्ट्वा स्वपुत्रवधदारुणवज्रपातम्<br>
नैकांश्च युद्धविमुखानभिमन्युबाणैः<br>
हत्वा कथंचिदपि तं बलिभिः सहायैः<br>
को नाम मे विजयिनोऽपि सुखावकाशः ।

अहो नृशंसकर्मा सौभद्रहतको येन न केवलं तुल्यबलो मे वत्सो लक्ष्मणो निर्जित्य पातितः अपि तु वयसा वपुषा वीर्येण च नितरां गरीयानपि वत्सो दुःशासनः प्रतिमर्म ताडितस्तीव्रपातैः पतत्रिभिर्जर्जरितगात्रः कथमपि दृढप्राणत्वाल्लब्धसंज्ञो नाद्यापि नीरुजः संपन्नः। (ध्यायन्निव) कालविदा तु प्राप्तकालमनुष्ठेयम्। (आत्मगतम्) एषोऽद्य सर्वदा कर्णादिभिरनर्थेभ्यस्त्रायमाणो मृदुयोधी जयद्रथो महेश्वरवरबलेन सर्वेषामेक एव शरणं जात इदानीं कमप्युत्सेकमारूढः । विडंबनेयमस्मद्योधानां यदस्याल्पकस्यावदानाच्चैरद्य जितकाशिभिर्भाव्यम्। तथापि प्रत्यक्षविक्रमेण जयशाली क्षुद्रप्रकृतिरप्येषोऽवश्यमद्य नो बहुमंतव्यः। (प्रकाशम्) वयस्य सिंधुराज एहि। ( अस्य हस्तमवलंबते।)

जयद्रथः-( आत्मगतम् )-एकादशानामक्षौहिणीनां नायकैर्वंदितचरणयुगलेन कौरवराजेनैवमद्य स्वयमुपेत्य दत्तहस्तावलंबास्त्रिभुवनेनापि समत्सरमित्रावलोक्यते जयद्रथवीरः । येनैते कर्णाश्वत्थामप्रभृतयो गलितोत्साहा इवाधोमुखा इतोऽभिवर्तंते ।

( प्रविशंति यथानिर्दिष्टा शल्यकर्णाश्वत्थामानः ।)

जयद्रथः-( प्रकाशम् ) वर्धतां भवानस्मत्प्रभावासिद्धेन विजयेन ।

कर्णाश्वत्थामानौ—( जनांतिकम् ) धिग्विकत्थनम् ।

सुयोधनः— सिंधुराज दुरनुमेयप्रभावेण भवता कुरूणां जीवितं यशश्चाद्य प्रतिपालितम् ।

अंगेशदुःशासनगौतमानां द्रौणेश्च शक्तिर्विफलेव यत्र
त्वया सहायेन तमद्य विघ्नं हत्वा रणं दुस्तरमस्मि तीर्णः ।

अये अंगराज मद्रेश्वर आचार्यपुत्र इत आसतां भवंतः ।

( सर्वे यथोचितमुपविशांति । )

जयद्रथः-राजन् उदीर्णधन्वा सौभद्रो दैवेन लंभितव्यूहच्छिद्रोऽकृतास्त्राणामसाध्य एवासीत् ।

ससौबलं शल्यमतीत्य बाणैर्द्रोणातिसंधानमसौ विधाय
व्यूहं बिभेदाशु विजित्य कर्णं पितृव्यहर्षं जनयन्क्षणैकम् ।

अथ च

सर्वानप्यतिशायिना पटुतया डिंभेन तेनाचिराद्
गुंजच्चारुधनुर्विसर्जितशरव्रातेन संच्छादिते
शंकासंकुलमानसैः कुरुरथैर्दृष्टे रणे भैरवे
भूतोऽहं शरणं कृपस्य च तदा द्रोणस्य कर्णस्य च ।

किंचित्करैः कुरुबलैर्वितते विरोधम्
पांडून्प्रति श्लथरयैः समुपेक्षमाणैः
हेलावशाद्गुरुपराक्रममद्य यावत्
नास्माभिरस्त्रमुपयुक्तममोघवीर्यम् ।

सुयोधनः—(स्वगतम्) इयमस्य विकत्थनास्माभिः संभावितैवासीत् । कर्णाचार्याधिक्षेपवादस्तु कलहं जनयिष्यति । सुलभमत्सरोऽङ्गराजः शीघ्रकोपी चाश्वत्थामा । कथमपि वयसा धिया च ज्येष्ठस्य सूनृतवादिनो महात्मनो मद्रराजस्य वचोभिरेवोभाविमौ शमयितव्यौ भविष्यतः । (प्रकाशम्) सिंधुराज यथार्थमाह भवान् ।

कर्णः—यथार्थं चेन्नोच्चारणमर्हति । न हि दिनकरोऽहं प्रकाशवानिति उद्घोषयति ।

अश्वत्थामा—सिंधुराज न भवतो विजयसिद्धिगौरवमपलपामि किं तु ।

दुर्भेदव्यूहनिर्माणे नैपुणं येन दर्शितम्
तस्य तातस्य मे युक्तं जयांशं दातुमर्हसि ।

कर्णः—महाराज गर्भरूपेणाभिमन्युना आदित एव कुरुप्रवीरैस्तितिक्षितेन वर्धितो रणसंरंभः । वत्सश्च लक्ष्मणो नापर्याप्तोऽपि दैवप्रातिकूल्याद्वीरधर्ममनुप्राप्तः । वीरवन्न निगीर्य निजदुःखं भवता दत्तोत्साहैः सर्वैरपि स्वस्ववीर्यानुरूपं युद्धमपि दत्तम् । न हि स्वप्नेऽपि भवादृशः शिशुजनविक्रमादुद्वेगमनुभवंति । तत्र च यत्कृतं सिन्धुराजेन तच्च न स्ववीर्येण । तपसाराधितेन भगवता वृषध्वजेन दत्तवरः किलैष प्रागल्भ्यमवाप्तः । वरप्रभावाच्च जितमनेन । न हि अन्यदा

कर्णदुःशासनादयो विक्रमगुणेन जयद्रथेनातिशयिताः श्रूयंते ।

सुयोधनः—अंगराज कृपाश्वत्थामदुःशासनसहायोऽहं पांडवान्न गणयामि। भवत्साहाय्येन तु त्रिलोकीमप्यात्मसात्कर्तुमहमाशंसे । अद्य तु यथाकथंचित्तितिक्षमाणेष्वस्मासु देशकालवित्सिंधुराजश्चेद्रणधुरां नावक्ष्यत्तदा दिष्टं प्रतिकूलमेवाभविष्यादिति तर्कये ।

जयद्रथः—भो भो अतिरथ । वरप्रभावेण जितमिति न कदर्थ्यते । तथापि भगवत्प्रसादलब्धं प्रभावमुद्भावयितुं पुरुषकारविशेष एवेष्यते । भवतापि तपःसंभ्रमेणास्ति किंचिदुपार्जितमस्त्रबलम् । न किल प्राप्तकाले संनिहितं तदद्य दृष्टम् ।

कर्णः—यतो न दृष्टं तदुक्तपूर्वम् । आशयस्तु यस्य सार्वकालिकः पुरुषकारस्तस्यैव स आत्मीय इति ।

जयद्रथः—(वैचित्र्यं रूपयन्) राजन् सुयोधन । समरेषु विहितावदानाः पुरुषा बंदिभिः स्तूयमानानुभावा धृतिमंतः संमानपूर्वमभिभाष्यंते । इह तु भवत्साहाय्यकं कृत्वा विपरीतफलमेवात्मायासं पश्यामि । अत एव खलु

अगणिततनुतापः स्वार्थबुद्धिं विहाय
मुहुरधिगतजन्मा केवलं लोकभूत्यै
परहितरतचेताः कार्यमित्येव कुर्वन्
अवसितगुरुकृत्यः सज्जनो न ब्रवीति ।

सत्यवचनेन च मया आत्मा तव सदस्यानामुपहास्यतां नीतः । एवमवमतो नाहमत्रोषितुमुत्सहे । एष स्वराजधानीं प्रतिगच्छामि । (उत्थाय)

कृतविदो न भवंति यदा जनाः
उपकृतिर्विफलैव भवेत्तदा
अगुणवित्सु भवत्सु मम श्रमः
बधिरसंसदि गातुरिवाफलः ।

शल्यः–( निरुंधन् ) अये सिंधुराज को नाम भवत्प्रशस्तिवादं प्रतिरुंध्यात् । यतः

तितिक्षां वा मुमुक्षां वा यदा वयमुपाश्रिताः
त्वमेवाजायथा राजन् गतिर्नोऽद्य ध्रुवा रणे

तथैव न न वीरायितमस्मत्सेनानीभिः । कुतः

शरान्विकिरतो द्रुतं धनुरकृंतदंगाधिपः
ममर्द रथपार्श्वगांस्त्वरितविक्रमो गौतमः
असिं निजशरैः करादगुरुरपाहरच्चार्जुनेः
निहत्य गदया व्यसुं तमकरोच्च दौःशासनिः ।

एवमपि

निर्यद्बाणस्फुलिंगं विघटितकटकप्रोच्छलद्धूलिधूमम्
घोरास्त्रार्चिर्निकायं स्फुटितगजघटाकुंभटंकारघोषम्
यत्नैः शांतं वहूनां विततनिजयशश्चंडिमानं विचिंत्य
बालं चेतस्तमस्मद्दलदवदहनं लज्जते कत्थनासु ।

जयद्रथः–वस्तुत एतावदेव पृच्छामि यद्यद्य पांडवहतका व्यूहभेदं व्यधास्यंत का वार्ता कौरववीराणामभविष्यदिति । सर्वथा सिंधुराज-

बलशरणानां युष्माकं विजयमद्य सिद्धं विद्धि ।

युधिष्ठिरं पवनसुतं यमौ कदा
समागतान्ननु जितवान्भवत्सु कः
पितामहोऽपि स बलवान्न्यपाति यैः
मया तु ते युधि हसता पराजिताः ।

( उभावुपविशतः । )

सुयोधनः—अव्यभिचरितवाक्यं न वंदनीयः सिंधुराजः ।

रणभुवि यदपसद्वृद्धवीरः कुरूणाम्
गुरुरपि न स शक्तो निग्रहेऽजातशत्रोः
उभयमपि कुरूणां वीर्यलोपं व्यनक्ति
विजय उपनतोऽयं सिंधुराजप्रभावात् ।

अश्वत्थामा—न भूतार्थोऽन्यथोपापदयितुमिष्यते । यदि तु कुरुसैनिकेष्वद्वितीयो योद्धा जयद्रथः किं स पितामहनिपातनं मर्षितवान् । सर्वथा यथांगराज आह वरबलेनैतत्प्रक्रांतमिति ।

शल्यः—न चेयमवगणना सिंधुराजस्य । को हि सर्वातिशायिपौरुषः पुरुषप्रवेको भगवदाराधनमनाचरञ्जयशाली दृष्टः श्रुतो वा । तत्र च महेश्वरप्रसादपर्याप्ततपःसमाधिर्बीभत्सुतुल्यो जयद्रथ इति सविशेषं प्रशस्यः ।

कर्णः—मद्रेश्वर तपस्विता न वीराणामलंकारो यद्भवांस्तं गोपालसारथिमत्रोपमानीकरोति ।

अश्वत्थामा—अस्ति अलंकारो वशित्वं लक्ष्मीवताम् । विशेषेण च तथा

श्रोत्रियाणाम् । यदि अकिंचनः पार्थः तपश्चरितवानननन्यगतिकत्वा-देव तदिति विनिगमः ।

सुयोधनः—उदग्रास्त्रप्रभावः श्रूयते मध्यमपांडवः न तु अंगराजमनुयास्य-तीति मन्ये ।

अश्वत्थामा—पितामहं चाभिहतवानिति नोत्कर्षाय कौंतेयस्य । शिखं-डिनि संहृतत्राणमोक्षस्य छद्मवेधित्वेन सुप्तस्येव निपातनात् ।

जयंद्रथः—एवं कूटयोधी कूटेनैव हंतव्यः स दुरात्मा ।

कर्णः—(सनिकारम्) तत्किं विनष्टाः समरयोधिनो यदेवं कापुरुषवन्मंत्र्यते ननु अहमेव हंतार्जुनमायोधने । आचार्यः सुयोधने शिथिलप्रीति-त्वान्मध्यमवेगेनैव युध्यते । पार्थपक्षपाती च सर्वदा महाराजं न्यक्क-रोति पार्थं च महीयते । युधिष्ठिरनिग्रहः पार्थसंनिधानेऽसुकरः सर्वात्मना युध्यमानेन आचार्येणेति कथं प्रतीयेत ।

अश्वत्थामा—अंगराज । न विदितवेदितव्येष्वतिशंकनीयम् ।

शल्यः—ननु अंगराज मैवमाचार्यं प्रति विब्रूहि ।

खांडवस्य दहने यमजित्वा स न्यवर्तत दिवं विबुधेंद्रः
यः पिनाकिनमतोषयदाजौ का कथास्य पुरतो न्वितरेषाम् ।

साधुदर्शी किलाचार्यो न दुर्घटघटनायां प्रवर्त्स्यति । न वा भवतापि न प्रत्यक्षीकृतपूर्वं पार्थचरितम् ।

चित्रसेनेन बद्धेषु धार्तराष्ट्रेषु कार्मुके
अपकर्तुमनःस्वासीन्मोक्षहेतुर्धनंजयः ।

नापीदं पौराभाग्यादुल्लिख्यते । भवंतोऽपि अनल्पपौरुषा देवदानवा-

नपि समितिषु शिक्षायितुं क्षमाः। किं तु युद्धं द्यूतं च कृतांतवशादेकतरपक्षपाति। कृतांतगतिज्ञश्चाचार्यो विचार्य मंत्रयते।

कर्णः—अत्रभवान्प्रायेणास्मदुत्कर्षे न सुमनायते। किं तु

न स दूरमस्ति समयो धनंजयम्
अवलोकयिष्यसि यदा निवर्हितम्
सहकेशवं शितशरै रणे मया
नृपतेः प्रियं गुरुतरं चिकीर्षता।

शल्यः—एवं सिध्यति चेत्सर्वेषामेव जयाभिलाषिणां प्रियमेव नः।

जयद्रथः—(आत्मगतम्) अनेन शल्यवाक्येन तं क्रूरयोधिनं पार्थमनुचिंत्य पुनरपि अनल्पातंकमप्रत्ययं मे हृदयम्। यावच्च स कार्ययोगो न सिध्यति तावद्यत्सत्यं संमानमभिलाषुकोऽप्यहं महता कष्टेनात्मानमुत्साहयामि। पात्रविशेषन्यस्तस्तु मया कार्यभरः तेनास्ति मे दृढाशंसा। एवं घातितपार्थस्य नीतिनैपुण्यात् सैनापत्ये कृतपदस्य कर्णद्रोणादिभिः पुरत उत्पादितविजयस्य ममैव लोकेषूत्कर्षो भविष्यति। एते तु निमित्तान्येव। (प्रकाशम्) राजन् कुरूणां दैवदुर्विपाकान्मोहाद्धतचेतसा मयाद्यावधि स्वबलापह्नवः कृतः। इतःपरं तु सकलसेनाभरं मयि एव विन्यस्य विश्रब्धमास्तां भवान्।

अश्वत्थामा—किं नाम तातमतिक्रमितुमीहसे।

कर्णः—आचार्यपुत्र न केवलमाचार्यमपि तु सर्वानेव कुरुप्रवीरानधिधिक्षिपत्यनात्मज्ञः। न त्वहमेनं प्रकृतिस्थं मन्ये।

जयद्रथः—अश्वत्थामन्। अस्माकमसंनिधाने भवत्तातेन यच्छक्यं तद्दृष्टमेव सकलैरपि।

अश्वत्थामा—आः तातापवादिन् मृषाविकत्थन क्षुद्रबुद्धे ।

कर्णः—आचार्यपुत्र । आपातविजयमदमत्तो जयद्रथो जितकाशी असंप्रज्ञातनिजपरबलतारतम्योऽस्मासु कुपितेषु क्षणेनैव न भविष्यति। किं तु देशकालविदा भवता संयम्य कोपं कश्चित्कालः सोढव्यः ।

क्षुद्रापवादः श्रोतव्यः क्षांतेनैव मनस्विना
अवज्ञैव प्रतीकारस्तत्र सद्भिर्निरूपितः ।

जयद्रथः—नाहं मृषात्मश्लाघी नापि क्षुद्रः । कुरुपतये गुणज्ञाय जयावाप्त्यर्थं सौहार्दोचितं सदुपायमुपदिशामि । येनाचिरात्त्वं शूरमानिनं पार्थं हतं द्रक्ष्यथ । नैव सुविदितविक्रमाणां युष्माकं गुरुतरं पदमाक्रमितुं मे आयासः ।

सुयोधनः—सुहृत्तममेव त्वामवगच्छामि । नापि अंगराजप्रभृतिभिः प्राप्तकाले शैथिल्यमाविष्कृतम् । अंग सिंधुपते समानकार्याणामस्माकं विवादः शात्रवाणामुत्कर्षहेतुर्भवति । अतः प्रकृतमेवानुसरामः । अश्वत्थामन् । अंगराज । उक्तपूर्वं मया यथाहं वां क्रांतिनाववगच्छामि । युष्मदादिषु च भरं निधाय रणधुरामेनामुद्धिभर्मि ।

( प्रविश्य )

प्रतीहारी—जेउ देवो । तत्तभअदा आचारिजेण सेणावदिणा देवस्स संदेसो पहिओ जह अदिसंकुलसमरजज्जरिदसेणिआणुदंसणवसादो न पारिज्जइ विजअपूजाए संणिधादुं अम्हेहिं । अदो भअदा ज्जेव कुरुवीरेहिं सह अविलंविअ विजइणो सिंधुराअस्स महग्घा अवइदी अणुचिठिदव्वात्ति । [ जयतु देवः । तत्रभवताचार्येण सेनापतिना देवस्य संदेशः प्रहितो यथा अतिसंकुलसमरजर्जरितसैनिकानुदर्शन-

वशान्न पार्यते विजयपूजायां संनिधातुमस्माभिः । अतो भवता एव कुरुवीरैः सहाविलंब्य विजयिनः सिंधुराजस्य महार्घोपचितिरनुष्ठातव्येति । ]

सुयोधनः—यथाज्ञापयत्याचार्यः। ( निष्क्रांता प्रतीहारी ) मद्रराज तदिदानीं यथाचारमद्यतनविजयहेतवे सिंधुराजायौपयिकीमपचितिं प्रतिविधास्यामहे ।

शल्यः—उपपद्यते । सामंतत्वान्महाराजस्य भृत्यभावेन महदुपकृतमद्य सिंधुराजेन ।

अवहितमनाः स्वाम्यादेशे श्रुते न विलंबते
गणयति न च क्लेशं कार्यं करोति य आदृतः
निजमिव हितं मत्वा भर्तुर्हिते निरतः सदा
स खलु विरलो भृत्यः पुण्यैः कथंचिदवाप्यते ।

तथैव च

यः संप्रधारयति भृत्यबलप्रमाणम्
कार्येषु चैनमुचितेषु तथा नियुंक्ते
सिद्धौ सदानमभिनंदति च प्रशंसन्
स्वामी स एव गुणविद्भवति प्रशस्यः ।

सुयोधनः—एवमेतत् । कः कोऽत्र भोः ।

( प्रविश्य )

द्वाःस्थः—जेउ देओ । [ जयतु देवः ]

सुयोधनः—सुस्मितक । सकलसेनासु मंगलतूर्यनिस्वनैः सिंधुराज-

विजयमुद्घोषयितुं तत्कार्याधिकृतान्प्रतिसंदिश्य विजयपूजामंगला-न्युपानीयंताम् ।

**द्वाःस्थः**—जं महाराओ आणवेदि । ( निष्क्रम्य पुनः प्रविश्य ) अणुचिट्ठिदो महाराअस्स आदेसो । इमाणि उण पूआमंगलाइं । [ यन्महाराज आज्ञापयति । अनुष्ठितो महाराजस्यादेशः । इमानि पुनः पूजामंगलानि । ]

( नेपथ्ये तूर्यध्वनिः । जयद्रथं यथास्थानमुपवेश्य )

**सुयोधनः**—( मालां जयद्रथकण्ठेऽर्पयन् )

यामर्हयत्यपचितिं स पितामहो नः
द्रोणोऽथवा गुरुरुतांगपतिश्च कर्णः
तामेव तुल्यचरिते त्वयि कल्पयामि
धन्यो भव त्वमपि वीरवरेषु गण्यः ।

( वाद्यध्वन्यनंतरं नेपथ्ये वैतालिकौ )

वीरंमन्यान्महास्त्रैरपहृतयशसः पांडुपुत्रान्विधाय
सौभद्रं युद्धलुब्धं स्वजनविघटितं व्यूहबंधेऽवपात्य
विष्वग्विस्तीर्णकीर्तेर्जनितकुरुमुदः सिंधुराजस्य वीर्यात्
अद्यासावद्वितीयात्समुदितविजयो राजते राजराजः ।

अपि च

निर्ह्रादो मंजुकूजत्सुपिररवमनूज्जृंभते दुंदुभीनाम्
व्योमाभिद्योतयंति प्रतिशिविरलसद्दीप्ररत्नप्रदीपाः
वीराणां संप्रवृत्ताः प्रमुदितमनसां संघशः संगतानाम्
वीणानिक्काणमिश्राः पथि पथि रुचिरा नृत्तगीतोत्सवाश्च ।

**जयद्रथः**—( स्वगतम् ) अहो माहाभाग्यम् । अहो कृतार्थत्वम् यद्विश्वस्मि-

न्नुद्घोष्यते नो यशः। किं तु एवमानंदपरावधिमनुभवतोऽपि न मे हृदयादपक्रामति पार्थहेतुक आतंकः। एवं किल दुःखसंभिन्नानि सुखानि।

कर्णः—महाराज। गुरुतरोत्सवबहुमानेन जयद्रथस्यानृणीकृत आत्मा भवता।

शल्यः—सम्यगिदमनुष्ठितम्।

अश्वत्थामा—लब्धप्रतिष्ठ इदानीं सिंधुराजः

शल्यः—इतः परमनंतरकरणीयं विचिंतयतु महाराजः। श्वो हि अतिभीषणो रणसंमर्द उत्प्रेक्ष्यते। परागतश्च भवेत्पांडूनां शिविरं संशप्तकयुद्धादर्जुनः।

जयद्रथः—( शातिनाटितकेन ) किं न हतोऽस्मद्। ( इत्यर्धोक्ते ) वीरैः संशप्तकैर्भूयोभिरपि।

शल्यः—नैवमर्जुनविषये संभावनमप्यर्हति। रणादस्य व्यपनयने एव पर्याप्तास्तथाप्यात्मसंशयभाजः संशप्तकाः।

जयद्रथः—( सत्रासम् ) ननु राजन् चिंत्यतामस्मद्विजयः।

शल्यः—तत्पांडूनां व्यवसितं चारैर्विज्ञाय यथायुक्तं संविधेयम्। पुत्रवधाभिषंगेण परां काष्ठामधिरूढे पार्थमन्यौ आचार्यमंगराजं वा विहाय न कोऽप्युपरोधक्षमो भविष्यति। रक्षणीयश्च प्रयत्नेन सौभद्रवधप्रधानहेतुः सिंधुराजः।

जयद्रथः—( आत्मगतम् ) अपि विज्ञाता अनेन मे प्रयत्नगूढा महाभीतिः।

( प्रविश्य। )

पुरुषः—जेदु देवो। आचरिजो संदिसइ। सुदं मए दूअमुहादो संसत्त-

अबलाइं सव्वाइं वि विणासिअ विअइणा वासुदेवज्जुणा सरस्स-ईतीरे साअंसंज्झं उवासिदुं समिद्दावणं पविट्ठा त्ति । अदो मंतक-ज्जत्थं मंतासिबिरे संणिहिदा होंतु भवंतत्ति । [ जयतु देवः । आचार्यः संदिशति । श्रुतं मया दूतमुखात्संशप्तकबलानि सर्वाण्यपि विनाश्य विजयिनौ वासुदेवार्जुनौ सरस्वतीतीरे सायंसंध्यामुपासितुं सामिद्धनं प्रविष्टाविति । अतो मंत्रकार्यार्थं मंत्रशिबिरे संनिहिता भवंतु भवंत इति । ]

सुयोधनः—अहो अत्याहितम् । ननु मद्रेश्वर अंगराज महद्वैशसमित उत्तरमुपलक्षये ।

जयद्रथः—राजन् एवमस्मत्प्रतिष्ठामसहमानैर्बोधितोऽपि गुणज्ञो भवान्यथाभिमतमनुतिष्ठतु ।

शल्यः—ननु त्वर्यतामाचार्यदर्शनाय ।

जयद्रथः—( स्खलितक्रममुत्थाय आत्मगतम् ) न मे सैनापत्याधिकारं दित्सुरेषः । ( प्रकाशम् ) राजन् विजयसंग्रामश्रांतोऽहं तावद्विश्राम्यामि । भवंतः संमन्त्रयंताम् ।

कर्णः—विक्रमविजयिन एवमेव श्राम्यंति ।

अश्वत्थामा—विश्राम्यंति च ।

( सर्वे उत्थाय जयद्रथवर्जं निष्क्रांताः । )

जयद्रथः—( निश्वस्य ) किं नाम अधिकतरं वर्धते मे आतंकः । अथ वा यथा यथा विजयजनित उत्साहः शाम्यति तथा तथा क्षीणायुषो रोग इव स्फीतायते ममोद्वेगः ।

शिववरबलधार्ष्ट्यात्साहसेनावधूय

समरशिरसि पांडून्घातयित्वाभिमन्युम्

अवासितविभवोऽहं फाल्गुनात्क्रोधताम्रात्
भयविकल उदीक्षे मृत्युमायांतमद्य ।

तथापि कथंचित्कूटप्रयोगकृतावलंबः शिविरं प्रविश्य कार्य्यसिद्धिं प्रतिपालयामि ।

( निष्क्रांताः सर्वे । )

विजयपूजा नाम तृतीयोंऽकः ।



# वीरधर्मदर्पणनाटकम् ।

चतुर्थोऽङ्कः ।

( ततः प्रविशति शंकुकर्णः पिशाचश्च । )

शंकुकर्णः—अरे कुहरक्ख । णं अज्ज अम्हेहिं वणभोअणं एव्व अणुमाणिज्जदि । ता इह ज्जेव सव्वं उवाहर जं किंचि महाणसब्भंतरे तुए पक्कण्णं सिद्धं किदं होदि । [ अरे कुहराक्ष । नन्वद्यास्माभिर्वनभोजनमेवानुमान्यते । तदिहैव सर्वमुपाहर यत्किंचिन्महानसाभ्यंतरे त्वया पक्वान्नं सिद्धं कृतं भवति । ]

पिशाचः—तह कलेमि । ( निष्क्रांतः । ) [ तथा करोमि । ]

शंकुकर्णः–( परिक्रम्य ) एसो अहं घादिदाहिमण्णुणो जअद्दहस्स पिअंकरो अस्स सेअएण उलूएण महंतेण पारितोसिएण विण्णविअ प्पओजिओ अज्ज एदस्सिं अम्हाणं वलसंवद्धणे काअकज्जलकालाअससरिसे अंधआरे घणीभूदे संसत्तअरणादो पडिणिवट्टंते कण्हाज्जुणे गुत्तवहेण वावादिदुं किदव्ववसाओ इसीणं सामिद्धाहरणत्थरक्खिदं एदं सरस्सईतीरवणं पविट्ठो म्हि । रुक्खगुम्मांतरिदा च ठाविदा मए रक्खससेणा कज्जआले संणिहिदा भवे त्ति । अणेणेव्व वणमग्गेण पत्थो णिवट्टदित्ति उलूएण कहिदं । एरिसे दुग्गमारण्णमग्गे एक्को वि सहस्सेण जुज्झंतो विजई होदि । ता दाणिं एत्थ भोअणं णिव्वट्टिअ जत्थ गहणतमो काणणुदेसो तह ज्जेव्व पडिपालअंतो चिट्ठामि । [ एषोऽहं घातिताभिमन्योर्जयद्रथस्य प्रियंकरोऽस्य सेवकेनोलूकेन महता पारितोषिकेण विज्ञप्य प्रयोजितोऽद्यैतस्मिन्नस्माकं वलसंवर्धने काककज्जलकालायससदृशेंऽधकारे घनी-

भूते संशप्तकरणात्प्रतिनिवर्तमानौ कृष्णार्जुनौ गुप्तवधेन व्यापादयितुं कृतव्यवसाय ऋषीणां समिदाहरणार्थरक्षितमेतत्सरस्वतीतीरवनं प्रविष्टोऽस्मि । वृक्षगुल्मांतरिता च स्थापिता मया राक्षससेना कार्यकाले संनिहिता भवेदिति । अनेनैव वनमार्गेण पार्थो निवर्तत इत्युलूकेन कथितम् । ईदृशे दुर्गमारण्यमार्ग एकोऽपि सहस्रेण युध्यमानो विजयी भवति । तदिदानीमत्र भोजनं निर्वर्त्य यत्र गहनतमः काननोद्देशस्तत्रैव प्रतिपालयंस्तिष्ठामि । ] ( नाट्येनोपविशति । )

( प्रविश्य पिशितहस्तः )

पिशाचः— ( भोजनं विकीर्य ) विएउ शामी एशे उत्तलादो कुलुरुखेत्तलणादो दक्खिणादो शंशत्तअलणादो पच्चग्गे उण्हे उण्हे उव्वप्फलुहिले शामिणो कले महामंशे आणीए एदे अ पाणअपत्ते । लुहिलपालिपुलिदा चम्मणद्धा उंटघोणा णलकवाले अ । एदश्शिं मदंगअमत्थए शामिणो महाणशपक्काइं विविहाइं वंजणाइं मेदे वशा शिलाहंडे हडक्कमज्जे अ । एव्वं शव्वलशशवले लुइले ओट्ठावलुंपिज्जे शामिकले आहाले आणीए । ता भोअणे कलेदु शामी । [ विजयतां स्वामी । एतदुत्तरस्मात्कुरुक्षेत्ररणाद्दक्षिणस्मात्संशप्तकरणात्प्रत्यग्रमुष्णमुष्णमुद्बाष्परुधिरं स्वामिनः कृते महामांसमानीतम् । एते च पानकपात्रे । रुधिरपरिप्लुता चर्मनद्धा उष्ट्रघोणा नरकपालं च । एतस्मिन्मतंगजमस्तके स्वामिनो महानसपक्वानि विविधानि व्यंजनानि मेदो वसा शिराखंडा अस्थिमज्जा च । एवं सर्वरसशबलो रुचिर ओष्ठावलोप्यः स्वामिनः कृते आहार आनीतः । तद्भोजनं करोतु स्वामी । ]

शंकुकर्णः—साहु कुहरक्ख साहु । ( नाट्येनास्वाद्य ) कुहरक्ख । पुव्वस्सिं जम्मे सव्वरससेवणेण के मडआ किंरुइआत्ति केअलाए दिट्ठीए तुमं अहिजाणासि । अहं तु रसणाप्फंसणोत्तरं एव्व जाणामि । [ साधु कुहराक्ष साधु । कुहराक्ष पूर्वस्मिञ्जन्मनि सर्वरससेवनेन के मृताः किंरुचिका इति केवलया दृष्ट्या त्वमभिजानासि । अहं तु रसनास्पर्शनोत्तरमेव जानामि । ]

पिशाचः—शच्चे तक्किदे शामिणा । एशे शत्तिअबोडे कत्थूलिआमिअमंशपुट्ठे शोहणगंधे । अश्श मंशाइं खंडिअ एशे मउलमउले लशे णिक्काशिदे । पाशेदु शामी । [ सत्यं तर्कितं स्वामिना । एष क्षत्रियपोतः कस्तूरिकामृगमांसपुष्टः शोभनगंधः । अस्य मांसानि खंडयित्वैष मृदुलमृदुलो रसो निष्कासितः । प्राश्नातु स्वामी । ]

शंकुकर्णः—आहारप्पाणा अम्हाणं जादी । तह वि कुहरक्ख अज्ज जुज्झकज्जं गुरुअं । ता एत्तिएण अलं । [ आहारप्राणास्माकं जातिः तथापि कुहराक्ष अद्य युद्धकार्यं गुरुकम् । तदेतावतालम् । ]

पिशाचः—( भीतिनाटितकेन ) शामी शामी । मणुश्शे मणुश्शे । इमिणा गंधेण मए जाणिदे । शूअडमंशगंधे शूअडखादए मणुश्शे केबि णिअडे अवशप्पदि । ण हगे मणुश्शाणं दिट्ठिगोअले चिट्ठामि । मणुश्शे दिट्ठे अम्हकेलए शलीले उड्डीअ पणश्शदिव्व । ता हगे अवशलामि । अणुजाणादु शामी । [ स्वामिन् स्वामिन् । मनुष्यो मनुष्यः । अनेन गंधेन मया ज्ञातः । शूकरमांसगंधः शूकरखादको मनुष्यः कोऽपि निकटेऽपसर्पति । नाहं मनुष्याणां दृष्टिगोचरे तिष्ठामि । मनुष्ये दृष्टेऽस्मदीयं शरीरमुड्डीय प्रणश्यतीव । तदहमपसरामि अनुजानातु स्वामी । ]

शंकुकर्णः—मा भाअहि मणुस्सा रक्खसाणं असणं त्ति अम्हारिसाणं समीवे दुब्बला एदे । तुमं दाव दूरे अंतरिहिदो चिट्ठ । किंदु अम्हाणं कज्जव्वावारे एसो मणुस्सो पुढमं दीसइत्ति ण सोहणं सउणं । ( विलोक्य ) अए एसो उलूओ । [ मा बिभिहि । मनुष्या राक्षसानामशनमित्यस्मादृशानां समीपे दुर्बला एते । त्वं तावद्दूरेंऽतर्हितस्तिष्ठ । किं तु अस्माकं कार्य्यव्यापार एष मनुष्यः प्रथमं दृश्यत इति न शोभनं शकुनम् । अये एष उलूकः । ]

( ससंभ्रमं भोजनविघसादीनपसार्य निष्क्रांतः पिशाचः । )

शंकुकर्णः–( उत्थाय परिक्रामन् ) जहा अहं तक्केमि एसो अम्हे अवसप्पइ । पडिण्णादं अणुचिंठीअदि ण वत्ति दट्ठुं । एरिसी अविस्साससीला एसा जादी । अदो एव्व जमणअरे घोराणत्थपडिदा भूइट्ठं मणुस्सा दीसंति । अम्हे उण एअवअणा वअणं परिपालेम्ह । अंगीकिदं पाणच्चए वि ण तजेम्ह । एक्केण व्व वअणाणुपालणेण अम्हाणं रज्जभोआ होंति । [ यथाहं तर्क्कय एषोऽस्मानपसर्पति । प्रतिज्ञातमनुष्ठीयते न वेति द्रष्टुम् । ईदृश्यविश्वासशीलैषा जातिः । अत एव यमनगरे घोरानर्थपातिता भूयिष्ठं मनुष्या दृश्यंते । वयं पुनरेकवचना वचनं परिपालयामः । अंगीकृतं प्राणात्ययेऽपि न त्यजामः एकेनैव वचनानुपालनेनास्माकं राज्यभोगा भवंति । ]

( प्रविश्य गूढसर्पी )

उलूकः—णं एसो एआइ किं कज्जं णिव्वट्टिस्सदि । अह वा ण णाम वंचिदो अहं एदिणा पुढमं ज्जेव्व पारितोसिअं पडिच्छंतेण । उत्तं

हि तादेण । ( संस्कृतमाश्रित्य )

विश्वस्तेऽपि न विश्वासः कर्त्तव्यः सिद्धिमिच्छता ।
जीवन्नरो न विश्वस्यो यावत्कार्यं न साधयेत् ।

[ नन्वेष एकाकी किं कार्यं निर्वर्तयिष्यति । अथ वा न नाम वंचितोऽहमेतेन प्रथममेव पारितोषिकं प्रतीच्छता । उक्तं हि तातेन ]

शंकुकर्णः—णं अरे उलूअ मणुस्सहदअ । किं एत्थ आगमिअ अम्हाणं णिअकज्जारंभव्ववसिदाणं अवसउणं किदं तुए । अरे ण तुमं विअ अहं अंधआरे णट्ठदिट्ठी । तेन गूढं चरंतो वि मए दिट्ठो सि । णं मा पलाएहि इदो एव्व आअच्छ दाणिं । कज्जं तु अम्हाणं तुह दंसणेण धंसिदकप्पं । जं होदु तं होदु । [ नन्वरे उलूक मनुष्यहतक । किमत्रागम्यास्माकं निजकार्यारंभव्यवसितानामपशकुनं कृतं त्वया । अरे न त्वमिवाहमंधकारे नष्टदृष्टिः । तेन गूढं चरन्नपि मया दृष्टोऽसि । ननु मा पलायस्व । इत एवागच्छेदानीम् । कार्यं त्वस्माकं तव दर्शनेन ध्वस्तकल्पम् । यद्भवतु तद्भवतु ।]

उलूकः—( आत्मगतम् ) अए विडालक्खा रक्ससजादी अंधआरे अहिअदिट्ठी होदित्ति विह्मरिदं खु मए जो अहं एणं पेक्खिअ पलाइदुं किदक्कमो आसं । प्पदोससमए अंधआरो वि दाणिं घणीभूदो । णिउणं अ अणेण लज्जाविदो म्हि । होदु ण अवमाणचिंताए अवसरो एसो उत्तं हि तादेण । [ अये विडालाक्षी राक्षसजातिरंधकारेऽधिक दृष्टिर्भवतीति विस्मृतं खलु मया योऽहमेनं दृष्ट्वा पलायितुं कृतक्रम आसम् । प्रदोषसमयेंऽधकारोऽपीदानीं घनीभूतः । निपुणं चानेन लज्जापितोऽस्मि । भवतु नावमानचिंताया अवसर एषः । उक्तं हि तातेन ।]

मानोऽवमान इति मूर्खजनस्य चिंता
संत्यज्य लब्धमपि योऽर्थमपैति कोपात्
लोभाकुले जगति लाभमपास्य गच्छन्
आप्नोति निर्जलगतस्य गतिं झषस्य ।

मणुस्सादी अ एसो मए संतणीओ। ( उपसृत्य प्रकाशम् ) णं संकुकण्ण पसीद। सामी सिंधुराओ पडिक्खणं पुच्छदि का वट्टा का वट्टत्ति। ता णिरुवाओ तुह्न समीवं उवगदो म्हि। उत्तं हि तादेण ।

प्रार्थनापूरणाशक्तौ मैत्री रक्ष्या यदा भवेत्
मिषेण केनचित्तावदंतर्धाय सुखी भवेत् ।

ता मा कुप्प तुह वअणे चिट्ठिस्सं । [ मनुष्यादी चैष मया सांत्वनीयः। ननु शंकुकर्ण प्रसीद । स्वामी सिंधुराजः प्रतिक्षणं पृच्छति का वार्ता का वार्तेति । तन्निरुपायस्तव समीपमुपगतोऽस्मि । उक्तं हि तातेन। तन्मा कुप्य तव वचने स्थास्यामि । ]

शंकुकर्णः— जं होदु तं होदु। तह वि छम्मसीलस्स तुह संकं अवणइस्सं। ण एक्कलो ज्जेव महंते कम्माणि वावुडो अहं। एदे अस्स काणणस्स गहणुद्देसे मम परस्सदा सेणिआ तरुगुम्मसंवुदसरीरा णिलीअंति। निबिडीभूदे अंधआरे णिक्कमिस्संति। इमं सरं हत्थे दंसअंतो णिरूवेहि। अम्हदीअं सरं देक्खिअ ण कोवि तुमं संकिस्सादि मारिस्सादि वा। ( शरमस्मायर्पयति ) गूढं तहिं चरंतो पेक्ख अम्हाणं चरित्तं। ण रक्खसा मणुस्सा विअ मिप्पिंडलोहादो पडिण्णादपडिच्चाइणो। तुम्हाणं दसगद्दहभारपज्जत्तं णीदिसत्थं। अम्हाणं तु पाणच्चए वि जहावअणं

वद्दिदव्वं त्ति एदावदी ज्जेव्व णीदी । [ यद्भवतु, तद्भवतु । तथापि छद्मशीलस्य तव शंकामपनेष्यामि । न एकल एव महति कर्मणि व्यापृतोऽहम् । एतेऽस्य काननस्य गहनोद्देशे मम परःशताः सैनिकास्तरुगुल्मसंवृतशरीरा निलीयंते । इमं शरं हस्ते दर्शयन्निरूपय । अस्मदीयं शरं दृष्ट्वा न कोऽपि त्वां शंकिष्यते मारयिष्यति वा । गूढं तत्र चरन्पश्यास्माकं चारित्रम् । न राक्षसा मनुष्या इव मृत्पिंडलोभात्प्रतिज्ञातपरित्यागिनः । युष्माकं दशगर्दभभारपर्याप्तं नीतिशास्त्रम् । अस्माकं तु प्राणात्ययेऽपि यथावचनं वर्तितव्यमित्येतावत्येव नीतिः । ]

उलूकः—साहु संकुअण्ण वरपुरिसो सि तुमं । सच्चप्पिआ तुह्माणं जादी भोअप्पिआ अम्हाणं । उत्तं हि तादेण [ साधु शंकुकर्ण वरपुरुषोऽसि त्वम् । सत्यप्रिया युष्माकं जातिः । भोगप्रियास्माकम् । उक्तं हि तातेन ]

बलिनो युद्धमिच्छंति योगमिच्छंति योगिनः
दुर्बला भोगमिच्छंति सत्यमिच्छंति शीलिनः ।

तुह कज्जे सिद्धे सच्चसीलो संकुकण्णो व्ववसिदं णिव्वाहेदित्ति त्थुवंति तुमं सव्वे वि । असिद्धे उण अण्णो सामी मए अण्णेसइदव्वो भविस्सदि । उत्तं हि तादेण [ तव कार्ये सिद्धे सत्यशीलः शंकुकर्णो व्यवसितं निर्वाहयतीति स्तुवंति त्वां सर्वेऽपि । असिद्धे पुनरन्यो स्वामी मयान्वेषयितव्यो भविष्यति । उक्तं हि तातेन ]

गतविभवं यो भृत्यः परिचरति स्वामिनं स्वहितघाती
किं गलबद्धशिलोऽसौ नात्मानं पातयति गभीरजले ।

शंकुकर्णः–णं अरे कापुरिस तुह दंसणेण अज्ज कज्जं तु संसअगतं ज्जेव्व जइ अ अज्ज सिद्धी ण हवे पुणो वि तुम्हारिसाणं कज्जाणि ण कदा वि अंगीकरिस्सं। एसा विं दुदीआ पडिण्णा मह मुहादो णिग्गदा। जह तह होदु सप्पुरिसाणं ज्जेव्व संगदी उइदा। [ नन्वरे कापुरुष तव दर्शनेनाद्य कार्यं तु संशयगतमेव । यदि चाद्य सिद्धिर्न भवेत्पुनरपि युष्मादृशानां कार्याणि न कदाप्यंगीकरिष्ये । एषापि द्वितीया प्रतिज्ञा मम मुखान्निर्गता । यथा तथा भवतु सत्पुरुषाणामेव संगतिरुचिता । ]

( चोरिकयापक्रामन्निष्क्रांत उलूकः । )

शंकुकर्णः—( विलोक्य ) अए एदे रहारूढा एआइणा एव्व दुवे गोवालज्जुणा। चक्करक्खा वि ण दीसंति। ता सिद्धकप्पं पडिण्णादं मम । जाव एदाणं पच्छादो रंधं लक्खअंतो अवसप्पामि । ( निष्क्रांतः ) [ अये एतौ रथारूढावेकाकिनावेव द्वौ गोपालार्जुनौ। चक्ररक्षा अपि न दृश्यंते । तत्सिद्धकल्पं प्रतिज्ञातं मम । यावदेनयोः पश्चाद्रंध्रं लक्षयन्नपसर्पामि । ]

प्रवेशकः ।

( ततः प्रविशतो यथोक्तौ कृष्णार्जुनौ )

कृष्णः—धनंजय

भग्नैरपि प्रथममेत्य रणाय भूयः
दुर्योधनस्य विजयाय कृतप्रयासैः
संशप्तकैरमरभूमिनिवासकामैः
आत्मा हुतो हुतभुजि त्वयि जन्ययागे ।

यच्च तेऽद्य लघुहस्तत्वममोघशरत्वं च तन्मे न बहुशो दृष्टपूर्वम् ।

मोक्तुमिच्छंति यान्बाणानाकर्णाकृष्टकार्मुकाः
कबंधीभूय मुंचंति तानेव द्विषतां गणाः ।

अर्जुनः—भगवन् । आत्मगामिनी खल्वियं भवतः प्रशस्तिः । कुतः

दक्षे त्वयि प्रतिपदं पररंध्रबद्ध–
लक्ष्ये नियंतरि रथस्य तथा तथा च
शून्यप्रवृत्तशरवृष्टिषु शात्रवेषु
सिध्यंति जिह्मगतयोऽपि मदीयबाणाः ।

कृष्णः—सखे अतीव शोभसे विनयेन । भूतार्थं तु ते ब्रवीमि । यदासन्नास्तमयं भानुमंतं रणाद्यलोकयं सोऽपि देवः खलु भवदनुहरणकाम इव विक्राम्यति स्म । तदानीं हि

नीहाराणां विविधरचनाव्याजमातंगसंघान्
स्थाने स्थाने किरणनखरैरक्रमेणावदार्य
संध्यारागारुणरुचिसटोऽस्ताचलप्रस्थशोभी
भास्वत्सिंहोऽरमयत दृशौ रूपयंस्ते प्रतापम् ।

अर्जुनः—वयस्य अस्तमये त्वन्य एवाभवन्मदीयो भावः । यतः

यदा संध्यारागारुणिततुहिनैः पिंजरितदिक्
गतोऽस्तं तिग्मांशुर्व्यतिकरितनीहारपटलः
मतं मेऽयं कश्चित्समितिनिहताराातिरुधिरैः
प्रसाध्याशा वीरो गत इव लयं कालवशगः ।

भूयश्च तमनुचिंतयतो दिनमणिं किमपि द्रवतीव मे हृदयम् ।

कृष्णः—भवंत्येवं करुणशांतोन्मुखा वृत्तयः सूक्ष्मदर्शिनाम् । वयस्य । पश्य पश्य । स्वनिवेशमार्गं प्राप्ताः

अप्रेरिता अपि मया स्तिमितोर्ध्वकर्णाः
नासापुटस्फुरणसूचितसंप्रहर्षाः
एकांतलक्षितनिवासदिशो जवेन
वल्गंति हंसधवला हरयस्त्वदीयाः ।

अर्जुनः—प्रवृत्तमतिघोरं ध्वांतम् । किमपि च करुणाविह्वलोऽनुत्साहमिव सर्वथात्मानमहमनुभवामि ।

( प्रविश्य आकृष्टखड्गः )

शंकुकर्णः—अहो हरिखअरो अंधआरो अम्हाणं मअरस्स विअ जलणिही । ता अअं अहं विंडालक्कमेण रहस्स पच्छा उवसरंतो मणिमऊहदिप्पंतं सकिरीडअं से सिस्सं अणेण करवालेण णिपादेमि । ( चोरिकया परिक्रामति ) [ अहो हर्षकरोंऽधकारोऽस्माकं मकरस्येव जलनिधिः । तदयमहं बिंडालक्रमेण रथस्य पश्चादुपसरन्मणिमयूखदीप्यमानं सकिरीटमस्य शीर्षमनेन करवालेन निपातयामि । ]

कृष्णः—वयस्य अस्मिन्निबिडांधकारे तरुगहनवीथ्यां सावधानैरस्माभिश्चरितव्यम् । कूटप्रयोजिनो हि शकुन्यादयश्छिद्रान्वेषिणोऽस्मद्बलप्रवरेषु गुप्तघातिनः प्रयोजयेयुः । तत्सुसंन्नद्धवारबाणो दत्तावधानस्तिष्ठ । विजयविश्रंभान्निःशंका अंतरिताः पश्चाच्चक्ररक्षादयः ।

शंकुकर्णः—ण णाम लक्खिदो हं अणेण धुत्तसाराहिणा । रथस्सा अ

गंधमुवलंभिअ कण्णग्गीअं चालेंति । ता दाव दूरदो ज्जेव्व जोअं पडिपालअंतो उवसप्पामि । [ न नाम लक्षितोऽहमनेन धूर्तसारथिना । रथाश्वाश्च गंधमुपलभ्य कर्णग्रीवं चालयंति । तत्तावद्दूरत एव योगं प्रतिपालयन्नुपसर्पामि । ]

अर्जुनः–जनार्दन । विजयिनोऽपि किं नाम विपरीतानि निमित्तानि मे प्रादुर्भवंति । ( उल्काप्रकाशः तारास्फोटध्वनिः शिवारुतानि च )

वाश्यंते दीनशब्दा अशुभमिव शिवा ज्ञापयंत्योऽतिघोरम्
उल्का भूमिं सशब्दं सचकिततुरगप्रेक्षिताः संपतंति
बाष्पस्तंभश्च कंठे कलुषयति गिरं सीदतीवांगमंगम्
सव्याक्षि स्पंदमानं प्रतिभयजननं निर्वृतिं मे हिनस्ति ।

शंकुकर्णः–ही ही अणेण उक्कावादेण उवलक्खिज्जंतो कज्जं णासइस्सं ता इदो वि दूरअरोद्देशे अत्ताणं ठावेमि [ धिक् धिक् अनेनोल्कापातेनोपलक्ष्यमाणः कार्यं नाशयिष्यामि । तदितोऽपि दूरतरोद्देश आत्मानं स्थापयामि । ]

अर्जुनः—अकस्मादुद्वेगः करुणयति चेतो हतरसम्
निरालोको लोको जडयति च चैतन्यमधिकम्
द्रवीभूतं मन्ये हृदयमनिदानं किमपि मे
भवंतीमे भावाः किमिव धृतिमोषप्रकृतयः

यथा कश्चित्सद्यः प्रियविरहपीडाव्यतिकरः
महान्वानर्थः स्यान्निजजनविनाशप्रतिभयः

भवत्यंतर्यामी मम किल विकारोऽद्य वलवान्
इदानीमायत्यामपि विगलिताश्वासपिशुनः ।
ध्रुवमहमतिबीभत्समानिष्टपातं संभावयामि ।

शंकुकर्णः—हिअएण दीणत्तणं गदो अहिजोअजोग्गो एसो । ता मूसए मज्जारो विअ सज्जक्कमो उवसप्पामि । ( समीपमुपसर्पति ) [ हृदयेन दीनत्वं गतोऽभियोगयोग्य एषः । तन्मूषके मार्जार इव सज्जक्रम उपसर्पामि । ]

कृष्णः—ध्रुवमंतःकरणैर्महांतं खेदमनुभवति प्रियवयस्यः ।

अर्जुनः—( सदैन्यम् ) वासुदेव

आचार्येण युधिष्ठिरं प्रति कृता क्रूरा प्रतिज्ञा भवेत्
संतीर्णा ननु सा मयि व्यवहिते संशप्तकानां गणैः
घोरः प्राणगरीयसि व्यतिकरः प्राप्तोऽभिमन्यावुत

शंकुकर्णः—स दु वुट्ट एव । दाणिं तुमंमि उवट्टिदो । [ स तु वृत्त एव । इदानीं त्वय्युपस्थितः । ]

अर्जुनः—भीमे वा प्रियसाहसे स्थिरतमे पांडुध्वजिन्याश्रये ।

कृष्णः—वृकोदरं प्रति न वार्तापि अनर्थसंभावनस्य ।

शंकुकर्णः—ही ही को णु एसो विदूरे दीविआहत्थो उंटसादी विअ तुरअंतो इदो अहिवट्टमाणो दीसइ । एसो अवरो मे विग्घो ता भूओ वि दूरे णिलीणो छिद्दं पडिवालेमि । [ धिक् धिक् को न्वेष विदूरे दीपिकाहस्त उष्ट्रसादीव त्वरमाण इतोऽभिवर्तमानो दृश्यते । एषोऽपरो मे विघ्नस्तद्भूयोऽपि दूरे निलीनश्छिद्रं प्रतिपालयामि । ]
( निष्क्रांतः । )

अर्जुनः—संशप्तकाभियोगेन चिरविलंबितस्येव मे कोऽपि कुशलमावेदकोऽपि नार्येण प्रेषितः ।

कृष्णः—(हस्तेन दर्शयन्) ननु स कोऽपि दीपिकाहस्तः सादीतोभिमुखोऽभिवर्तते । त्वरयेम तावत् । (रथवेगं निरूपयाति ।)

(प्रविश्य दीपिकाहस्तः)

पुरुषः—ही ही भो । ईरिसं मे देव्वदुव्विलसिअं जं ईरिसाणं पुरिसविसेसाणं णिच्चविअअसालीणं इमिणा वज्जपाददारुणेण अप्पिअणिवेदणेण आणंदपरिसमत्ती मए कादव्वत्ति । होदु का गई । [ धिक् धिक् भोः । ईदृशं मे दैवदुर्विलसितं यदीदृशयोः पुरुषविशेषयोर्नित्यविजयशालिनोरनेन वज्रपातदारुणेनाप्रियनिवेदनेनानंदपरिसमाप्तिर्मया कर्तव्येति । भवतु का गतिः । ] (उपसृत्य सास्रं प्रकाशम्) विएदु महाभाओ । णमो जोगेस्सरस्स । (कृष्णो रथं संस्थापयति ।) [ विजयतां महाभागः । नमो योगेश्वराय । ]

अर्जुनः—अये आर्यस्य परिचरः करभकः । करभक किमिति सदैव प्रियवृत्तहारी अद्य दुर्मनायमानः सगद्गदमिव भाषसे । अपि कुशली महाराजः ।

करभकः—कुसली सभादुओ । सेसं एसो लेहो णिवेदइस्सदि जं ससुहेण कहिदुं ण कस्सवि धीरत्तणं पंडवेसु । [ कुशली सभ्रातृकः । शेषमेष लेखो निवेदयिष्यति यत्स्वमुखेन कथयितुं न कस्यापि धीरत्वं पांडवेषु । ]

(रुदन्रथोपस्थे दीपिकासमीपे लेखं विसृज्यापसर्पति ।)

कृष्णः—(गृहीत्वा वाचयति) संशप्तकरणविजयिने वत्साय अर्जुनाय

भगवते पांडवकुलतनुत्राणभूताय वासुदेवाय च दुरात्मा युधिष्ठिरः-

अर्जुनः-अहो किं नामार्यचरितोऽप्यार्य आत्मानमुपालभते ।

कृष्णः-विहितघोरवैशसो दारुणमप्रियं निवेदयति । (सधैर्यम्) शांतं पापम् । (रथादवतीर्य)

अर्जुनः-सर्वथा यथा मे हृदयं शंकते ।

कृष्णः-(वाचयति) अद्य संशप्तकैरपनीतयोर्भवतोस्तत्रभवताचार्येणास्मद्वीरप्रतिकाराय चक्रव्यूहो विरचितः ।

अर्जुनः-धिक् धिक् अवगतो लेखाभिप्रायः । न वत्सादभिमन्योरन्यरस्तद्व्यूहभेदमवगच्छति । उपसंहारस्तु नानेनाभ्यस्तः ।

कृष्णः-द्रक्ष्यामस्तावद्विजयसिद्धिम् । (वाचयति) तत्र कुलकलंकभूतेन मया प्रेरितो विदितपराक्रमो द्वितीयमस्मदुच्छ्वसितं वत्सोऽभिमन्युः ।

अर्जुनः-हा हा महापदि समुत्क्षिप्तो वत्सः ।

कृष्णः—अहो विक्रमो वत्सस्य । (वाचयति) तत्राचार्याश्वत्थामकृपदुःशासनशल्यकर्णादीन्योधप्रवरान्पराभूय नैकसाहस्रांश्च कौरवसामंतान्परलोकशरणान्विधाय-

अर्जुनः—ततस्ततः ।

कृष्णः—व्यूहं विभेद्य जयशाली प्रतिनिवर्त्स्यन्नुक्तप्रभृतिभिर्वीरैः संभूय प्रतियोध्य संग्रामे निपातितः । (लेखं त्यक्त्वाश्रूणि प्रमार्ष्टि ।)

अर्जुनः-हंत भोः कृतांत । हा वत्स मम हृदयविकासपूर्णेंदो हा पांचालीसुभद्राजीवितैकायतन । (मूर्च्छति)

कृष्णाकरभकौ-(उपसृत्य वीजयतः)

करभकः-कुमार समाश्वसिहि समाश्वसिहि ।

कृष्णः—हा हा दैव असंभाव्यान्यपि घटयसि ।

तातो वीरः सकलभुवनेष्वप्रतिद्वंद्वधन्वी
सद्यो विश्वग्रसनपटवो यस्य पक्ष्या वयं च
धर्मैकास्थे बत शिवमनुध्यायति ज्येष्ठपार्थे
कालोऽकालेऽहरदमुमपि प्राक्तनानां विपाकात् ।

अर्जुनः—( संज्ञां लब्ध्वा ) अहो नु खलु भोः । कथमेकाकी मे कुमारोऽरिचक्रे प्रवेशितः । अहो बत आर्य ।

किं नासीत्स वृकोदरोऽयुतमतंगौजा गदी संनिधौ
किं माद्रीतनयावुभावतिरथावास्तां विरक्तौ रणे
किं वा धर्मरतिर्निजं त्वमतुलं वीर्यं वृथामन्यथाः
सर्वेषामपि जीवितप्रियतमो व्यूहे यतः पातितः ।

अपि च आर्य धर्मैकरस

अयि हंत हंत कथमेककं प्रियम्
सुकुमारकायमरिवीरसंहतौ
जयकामनिर्दयधिया प्रहिण्वता
भवता न दारुणविधिर्विशंकितः ।

कृष्णः—सखे अगतिकगतिना युधिष्ठिरेणैवमनुष्ठितम् । एषा इयं दैवगतिः ।

अर्जुनः—अत एव आयतिवेदिना पितामहेन वत्सस्य दीर्घायुष्ट्वमनुक्त्वैवाशीर्दत्ता । लक्षितमपि नास्माभिरेवमाशंकितम् । मुषितश्चाहं तादृक्पुत्ररत्नम् । हा वत्स हा तात

हा जात मन्नयनपंकजबालसूर्य
हा पांडवप्रिय यदूद्वहभागिनेय
त्यक्त्वादयान्सपदि रोषवशादिवास्मान्
वीरौघदर्पनिकष क्व बतासि यातः ।

हा सुभद्रे हा पांचालि घातिताभिमन्युः कथं वां मुखं दर्शयामि । शून्योऽयं जीवलोकोऽर्जुनस्य । न चाहमिदानीं जीवितुमुत्सहे । वत्स जात क्व पश्यामि त्वां क्वान्वेषयामि । भगवन् त्रायस्व पांडवान् । गच्छाम्यहमभिमन्युना गतं पंथानम् ।

( मोहमुपगतः )

( कृष्णकरभकौ भूयो विजयतः )

कृष्णः—अहह अतिदारुणोऽयं शोकावेगः । कथं चैवंविधे व्यतिकर एनं सांत्वयेयम् । ममापि हि हृदयं स्तंभितमपि तीव्रशोकक्रकचेन द्विधाक्रियत इव ।

तं सिंहसंहननमंबुदधीरघोषम् ।
मेरोरिवैकमिह जंगममुच्चकूटम्
मद्दर्शनेऽतिविकसन्मुखपुंडरीकम्
पश्यामि वत्समभितः खलु वर्तमानम् ॥

( अश्रूणि मुंचन्मुखमावृत्य तिष्ठति )

करभकः—समाश्वासयतु भगवान् वयस्यम् । ( वीजयति )

( प्रविश्य )

राक्षसः—( सवेगोद्यतखड्गः ) एसो मे कालो पडिण्णादाणुट्ठाणस्स ।

( अर्जुनमुपसृत्य ) एसो हदो सि णिक्कंटकं होदु सिंधुराअस्स । [ एष मे कालः प्रतिज्ञातानुष्ठानस्य । एष हतोऽसि । निष्कंटकं भवतु सिंधुराजस्य । ]

करभकः–भअवं परित्ताहि परित्ताहि दीविआप्पआसेण उवलक्खिदो आतताई को वि । [ भगवन्परित्रायस्व परित्रायस्व दीपिकाप्रकाशे-नोपलक्षित आततायी कोऽपि । ]

कृष्णः–( परावृत्य ) धिक् कूटघातिन् रंध्रमन्वेषक । नेदानीं भवसि । ( राक्षसं विवृत्तबाहुं कंठे गृह्णाति । ) इदमेवास्माभिः शंकितपूर्वम् ।

शंकुकर्णः–भो भो मुओ म्हि मुंच मं जीअंतं रक्खसो हं जअद्दहजो-जिओ । सरणं दाणिं तुमं अस्सिदो । [ भो भो मृतोऽस्मि मुंच मां जीवंतं राक्षसोऽहं जयद्रथयोजितः । शरणमिदानीं त्वामाश्रितः । ]

कृष्णः–( मुक्त्वा ) दुरात्मन् । अन्येन योजितोऽसीतिश्रवणेन न हतो-ऽसि । करभक अस्मत्समक्षं बद्धहस्तमेनमनुपालय । पंजरगतो व्याघ्र इवास्मद्दृष्टिगोचरो नायमिदानीं किमप्यपकरिष्यति ।

करभकः–(राक्षसं बद्धहस्तं करोति)

अर्जुनः–( पुनः संज्ञां लब्ध्वा ) अहो न दृश्यतेऽभिमन्युः सखे वासुदेव ।

मद्युम्नं मधुराकृतौ नयविधौ त्वां मां च दिव्यायुधे
धर्मं धर्मरतौ यमौ च विनये भीमं च यः साहसे
सर्वानेवमनुव्यधान्नृपगुणैः संपन्न इत्यादरात्
युष्माभिर्युवराज इत्यभिहितो वत्सो गतो मे क्व सः ।

कृष्णः–वयस्य अलमिदानीं शोकेन । अतिक्रांते मनीषिभिर्धैर्य-

माहरणीयम् । वीरधर्मेण युध्यमानोऽभिमन्यू रणे पतितः सपदि स्वर्गसुखभाक्संपन्नः । किंचातः परं सर्वक्षत्रियैः प्रार्थ्यते । यद्गुरुसंभारसंरंभैर्यज्ञैरपि दुर्लभं तत्स्वधर्मालंबनमात्रेणाभिमन्युना लब्धं जन्मलाभफलम् । मा भूत्स इदानीं नो मन्युविषयः ।

अर्जुनः—भगवन् कस्तत्र वचोऽन्यथा मन्येत । एवं वत्सस्य स्वधर्मापराङ्मुखस्य देहपातेनापि वीरपुत्रोऽहमात्मानमभिनंदामि । शोकस्तु स्वभावसुलभो देहिनाम् । भवद्वचोभिस्तमुत्तीर्णोऽस्मि । किं तु न कोऽपि कौरवेषु वत्सस्य प्रतिभटस्तुल्ययोध्युपलक्ष्यते । तत्कथमिदमापतितम् ।

करभकः—(राक्षसं संस्थाप्य) दिट्ठिआ सोआवेएण उज्झिदो धणंजओ । [ दिष्टया शोकावेगेनोज्झितो धनंजयः । ]

अर्जुनः—( विलोक्य ) अये किं पुनरिदं क्रूराकारं सत्त्वं दृश्यते ।

करभकः—एसो कुणवासणो को वि क्कूरं ववसंतो भअवदा णिज्जीअ मम हत्थे दिण्णो । एहि रे णिसाचर दंसेहि णिअं विअवग्घसरिसं मअरदाढअं अस्सं । ( राक्षसमाकृष्य ) [ एष कुणपाशनः कोऽपि क्रूरं व्यवस्यन्भगवता निर्जित्य मम हस्ते दत्तः । एहि रे निशाचर दर्शय निजं वृकव्याघ्रसदृशं मकरदंष्ट्रमास्यम् । ]

शंकुकर्णः—त्ताअध भो त्ताअध । सरणं उवगओ अहं ण वज्झो । [ त्रायध्वं भोः । त्रायध्वम् । शरणमुपगतोऽहं न वध्यः । ]

अर्जुनः—धिक् धिक् शरणमुपेते किं दारुणमाचर्यते ।

करभकः—विसंण्णे कुमारे घोरक्काहिदव्ववसिदो अअं आतताई अत्तभवदा णिवारिदो । [ विसंज्ञे कुमारे घोरात्याहितव्यवसितोऽयमात-

ताप्यत्रभवता निवारितः । ]

अर्जुनः—एवं नाम । भगवन्भवच्छरणा वयं न कालादपि बिभिमः । शरणमुपगतश्चायं न क्रूरमाचरिष्यति ।

करभकः—कुमार लेहो समग्गो अवलोईअदु । अत्थि अत्त विसेसत्थो । [ कुमार लेखः समग्रोऽवलोक्यताम् । अस्त्यत्र विशेषार्थः । ]

कृष्णः—( अनुवाचयति ) भगवता त्रिपुरारिणैव वास्मासु विहितः कोपः।

अर्जुनः—कथं पाशुपतप्रसाददायी भगवान्विश्वेश्वरः पांडुपुत्रेषु कोपं कृतवान् । नेदमवगम्यते । ततस्ततः ।

कृष्णः—( वाचयति ) यतः भगवतो महादेवस्य प्रसादेनोदीर्णवीर्यो जयद्रथो वत्सपार्ष्णिरक्षानस्मानवधूयात्मानं व्यवधानीकृतवान् । तन्मूलश्चास्मत्पक्षविनाशोऽद्य निर्णीतः ।

अर्जुनः—धिक् धिक् किं नाम स जाल्मः परदाराभिमर्शपातकी जयद्रथापसद ईश्वराद्वरमाप्तवानेष च विनियोग ईश्वरवरस्य । विश्वेश्वर कैलासपते तवापि किल पांडवामित्रेषु पक्षपातः । शृणुमस्तावत् ।

कृष्णः—( वाचयति ) एवं गते सविराटपांचालाञ्शोकमग्नानस्मानवधार्य भगवता वत्सोऽर्जुनः सांत्वनीयः । उभयोरागमनं विलंबितमिति घोरवृत्तकथने वाणी च न प्रसरेदिति वाचिकं लेखगतं प्रहितम् । कृतकार्याभ्यामविलंब्योपेत्य इत उत्तरं संविधानार्थं वयं द्रष्टव्या इति ।

अर्जुनः—किं नाम संविधानमन्यत् । अनुष्ठितमहापातकोऽप्यद्यापि जीवति स क्षत्रियवटुः ।

कृष्णः—इदं चास्यैव व्यवसितम् ।

अर्जुनः—किं सैंधवेन प्रेषितोऽयम् ।

कृष्णः—एवमेवानेन प्रतिपन्नम् । यच्छ्रुत्वा च नैष प्राणैर्वियोजितः ।

शंकुकर्णः—खमेहि खमेहि । जअद्दहस्स प्पिअं कादुं तस्स अणुअरेण उलूएण प्पेरिदो संकुकण्णो णाम अहं दुवे वि तुम्हे जिहांसू एत्थ उवट्ठिदो । एत्थ एव्व सो उलूओ वि । [ क्षमस्व क्षमस्व । जयद्रथस्य प्रियं कर्तुं तस्यानुचरेणोलूकेन प्रेरितः शंकुकर्णो नामाहं द्वावपि युवां जिघांसुरत्रोपस्थितः । अत्रैव स उलूकोऽपि । ]

( प्रविश्य )

उलूकः—( तारस्वरेण रुदन् प्रणिपत्य ) खमेह खमेह । उदरंभरी जीविकत्थजअद्दहसेवावुट्टी अहं सामिणिदेसादो कूडकम्मम्मि प्पउट्टो इमं वुट्टिं उज्झीअ अण्णत्त प्पाणजत्तं करिस्सं । उत्तं हि तादेण । [ क्षमध्वं क्षमध्वम् । उदरंभरिर्जीविकार्थजयद्रथसेवावृत्तिरहं स्वामिनिदेशात्कूटकर्मणि प्रवृत्त इमां वृत्तिमुज्झित्वान्यत्र प्राणयात्रां करिष्यामि । उक्तं हि तातेन । ]

दुष्टेषु दुष्टवद्वृत्तिः सत्सु सद्वृत्तसदोचिता
सतामलाभे लोकेऽस्मिन्कूटशास्त्रं हितं स्मृतम् ।

करभकः—( उलूकमाकर्षति )

अर्जुनः—मुच्यतां मुच्यतां माणवकः । अनभिजातः क्षुद्रदर्शनो वराकः कोऽपि ।

करभकः—जहत्थणामो उलूओत्ति । [ यथार्थनामोलूक इति । ]

कृष्णः—शरणमुपगतावुभावप्यवध्यौ । जयद्रथस्तत्र कूटप्रयोगाद्विचि-

त्रवधमर्हति ।

उलूकः—अणुग्गहिदो म्हि । धण्णा तुम्हे जाणं दुवेणं वि वहे उज्जुत्ता वअं तुम्हेहिं मुक्का । [ अनुगृहीतोऽस्मि । धन्यौ युवां ययोर्द्वयोरपि वध उद्युक्तावावां युवाभ्यां मुक्तौ । ]

शंकुकर्णः—भअवं तुह बाहुवलं अणुहविअ तिणमिव गणएमि अत्ताणअं । भअअंतं वि मारेदुकामो मूढं अत्ताणं अवगदो म्हि । [ भगवन् तव बाहुबलमनुभूय तृणमिव गणयाम्यात्मानम् । भगवंतमपि मारयितुकामो मूढमात्मानमवगतोऽस्मि । ]

अर्जुनः—किं नाम भगवंतमपि हंतुमुद्युक्तः सैंधवापसदः । आः दुरात्मन् सिंधुकुलकलंक क्षत्रियमाणवक । कूटकारिन् अनात्मज्ञ । सुदृष्टः क्रियतामिदानीं लोकः । तथा हि

राधेयद्रोणदुर्योधनकृपशरणेष्वेव युष्मद्बलेषु
गांडीवोच्चंडघोषश्रुतिजनितभिया भिद्यमानेषु सद्यः
गुप्तं वीरोत्तमैर्वा कुरुषु यदि पुनः स्कंदतातेन साक्षात्
नादृष्ट्वा त्वां विपन्नं स खलु दिनमणिः प्राप्स्यति श्वोऽस्तकूटम् ।

करभकः—अवस्सं हंतव्वो कूडआरी दुरप्पा । [ अवश्यं हंतव्यः कूटकारी दुरात्मा । ]

अर्जुनः—किमुच्यतेऽवश्यमिति ।

नियतमुदितैवैषा संधा श्व एव जयद्रथम्
प्रतिविधिफलायाहं हंतास्म्यनस्तमिते रवौ

अथ स भगवानस्तं यायाद्वचो मुधयन्मम
स्वतनुमफलां सद्यो होष्याम्यहं खलु पावके ।

कृष्णः—सिध्यतु तेऽभीष्टम् । सैंधवहतक

यस्त्वं जित्वा वरबलवशाद्भक्तिलुब्धस्य शंभोः
घोराधर्मव्यातिकरमभूः सिद्ध एवं विधातुम्
तस्य ध्वस्ते समरनिकरे पश्यतां कौरवाणां
बाणो जिष्णोरविहतगतिः कर्तिता कंठनालम् ।

वयस्य आरोहतु रथं भवान् । ( उभौ रथारोहणं नाटयतः । ) उलूक गच्छ । एतत्प्रियावेदनेन प्रीणय निजस्वाभिनम् ।

उलूकः—विअअंतु भवंतो । अण्णो सामी मए अण्णेसणीओ दाणिं । [ विजयेतां भवंतौ अन्यः स्वामी मयान्वेषणीय इदानीम् । ]

( निष्क्रांतः )

कृष्णः—शंकुकर्ण त्वमपि यथारुचितं साधय ।

शंकुकर्णः—ण अहं दाणिं क्कूरसीलो । भअवदो हत्थप्फंसेण सुद्धसीलो महाभाअस घडुक्कअस्स अणुअरो होदुं इच्छामि । [ नाहमिदानीं क्रूरशीलः । भगवतो हस्तस्पर्शेन शुद्धशीलो महाभागस्य घटोत्कचस्यानुचरो भवितुमिच्छामि । ]

( नेपथ्ये कलकलः । सर्वे विस्मिताः )

अर्जुनः—किं नाम भवेत् ।

करभकः—( विलोक्य ) णं उलूअस्स अत्तस्सरं सुणिअ किदत्तरो चक्करक्खिगणो पज्जलिअदीविओ उवट्ठिदो । ता गदुआ इह संणिहिदा अ-

त्तभवंता त्ति कहेमि। [ननूलूकस्यार्तस्वरं श्रुत्वा कृतत्वरश्चक्ररक्षिगणः प्रज्वलितदीपिक उपस्थितः । तद्गत्वेह संनिहितावत्रभवंतौ कथयामि ।]

(निष्क्रम्य पुनः प्रविश्य)

करभकः—अच्छरीअं अच्छरीअं। चक्करक्खेहिं महंतं तरुगुम्मगुत्तं रक्खसबलं णिज्जीअ बंधिअ इदोमुहं आणीअदि। [आश्चर्यमाश्चर्यम् । चक्ररक्षैर्महत्तरुगुल्मगुप्तं राक्षसबलं निर्जित्य बद्ध्वेतोमुखमानीयते । ]

शंकुकर्णः—खमीअदु अवराहो सअणस्य । अम्हकेरअं एदं बलं तुम्हाणं दासभूदं ता वीसद्धं मोईअदु।] क्षम्यतामपराधः स्वजनस्य। अस्मदीयमेतद्बलं युष्माकं दासभूतं तद्विश्रब्धं मोच्यताम् । ]

अर्जुनः—यथा भगवान्मन्येत ।

कृष्णः—ननु वयस्य मुच्यतां सत्यधर्माऽस्मत्पक्ष्यभूतो राक्षसगणः ।

अर्जुनः—शंकुकर्ण गच्छ स्वबलेन घटोत्कचाश्रयम् । भूयोऽपि कार्यकाले त्वां द्रक्ष्यामः । करभक आवेदय चक्ररक्षेभ्यः सख्यमस्माकं राक्षसगणेन । तूर्णं चास्माननुयांतु सर्वेऽपि।

(यथायथं निष्क्रांताः सर्वे ।)

इति प्रतिज्ञा नाम चतुर्थोऽङ्कः ।



# वीरधर्मदर्पणनाटकम् ।

## पंचमोऽङ्कः ।

( ततः प्रविशति शंकुकर्णः )

शंकुकर्णः--पंडवपक्खं पडि प्पउट्टेण मए णिसम्मि सुदो कोरवाणं मंतवित्थरो । कोवि कालो एदाणं मंतअंताणं । आसण्णप्पहादा हि णिसा । अज्ज दाणिं कुरुराअणिब्बंधादो पडिण्णादं आआरिज्जेण जअद्दहपरित्ताणणिमित्तं एव्वं । वूहमुहप्पडिट्ठिदं मं अणतिक्कमिअ ण अज्जुणो जअद्दहं आसादेदुं पहविस्सादित्ति । एसो तत्तभवदो अज्जुणस्स महंतो पच्चूहो । किं तु स भअवंतो एणं णिअपडिण्णापूरणे पारइस्सदि । जअद्दहो दु पिदुणो तवोबलेण अवज्झकप्पोत्ति वि आवाददो सुदं उलूएण मे कहिदं । तं वित्थरेण उवलंभिअ तह किंचि जइ मए पडिविहादव्वं होदि तं अवस्सं कदुअ कण्हाज्जुणाणं जीअपरित्ताणोवआरस्स अणिणीहुविस्सं । ( परिक्रम्य ). अए एदे ते एव्व अब्भुअदंसणा वीरा कण्हाज्जुणा सोम्मवेसेण आचारिजाशिबिरं अहिवट्टंति । अपुव्वो क्खु को वि भावो आचारिज्जं पइ अज्जुणस्स । कोवि अ सिणेहो आचारिज्जस्स अज्जुणे । तह वि दु अज्जुणं पडिजुंझिउं बलीओ क्खु णिच्चओ आचारिज्जस्स त्ति णेदं तंतं धम्मो अग्गहो वा अम्हेहि विण्णाअदि । ( विलोक्य ) उवट्ठिदं पहादं । संणिहिदो अ अहिजोअआलो । ता ससेण्णो घडुक्कअशिविरं उवगमिस्सं । [ पांडवपक्षं प्रति प्रवृत्तेन मया निशायां श्रुतः कौरवाणां मंत्रविस्तरः । कोऽपि काल एतेषां मंत्रयमा-

णानाम् । आसन्नप्रभाता हि निशा । अद्येदानीं कुरुराजनिर्बंधात् प्रतिज्ञातमाचार्येण जयद्रथपरित्राणनिमित्तमेवम् । व्यूहमुखप्रतिष्ठितं मामनतिक्रम्य नार्जुनो जयद्रथमासादयितुं प्रभविष्यतीति । एष तत्र-भवतोऽर्जुनस्य महान्प्रत्यूहः । किं तु स भगवानेनं निजप्रतिज्ञापूरणे पारयिष्यति । जयद्रथस्तु पितुस्तपोबलेनावध्यकल्प इत्यप्यापाततः श्रुतमुलूकेन मे कथितम् । तद्विस्तरेणोपलभ्य तत्र किंचिद्यदि मया प्रतिविधातव्यं भवति तदवश्यं कृत्वा कृष्णार्जुनयोर्जीवपरित्राणो-पकारस्यानृणीभविष्यामि । अये एतौ तावेवाद्भुतदर्शनौ वीरौ कृष्णा-र्जुनौ सौम्यवेशेनाचार्यशिबिरमभिवर्तेते । अपूर्वः खलु कोऽपि भाव आचार्यं प्रत्यर्जुनस्य । कोऽपि च स्नेह आचार्यस्यार्जुने । तथापि त्वर्जुनं प्रतियोद्धुं बलवान्खलु निश्चय आचार्यस्येति नेदं तंत्रं धर्म आग्रहो वास्माभिर्विज्ञायते । उपस्थितं प्रभातम् । संनिहितश्चाभि-योगकालः । तत्ससैन्यो घटोत्कचशिबिरमुपगमिष्यामि । ]

( नेपथ्ये )

भो भोश्चतुरंगचमूसमवेताः सैनिकाः

रुचिरकवचैः संनह्यंतां बलानि पदातिनाम्
विविधकरणैः संयुज्यंतां रथाः कृतमंगलाः
सरसमधुरैर्भक्ष्यैः पेयैर्यथाविधि तर्पितम्
निजगजहयं सज्जीकार्यं रणाय च सादिभिः ।

शंकुकर्णः—जह अहं तक्केमि गुरुदंसणेण अत्ताणं किदत्थीकादुं अ-ज्जुणो भअवदा सह आचारिज्जसमीवं उवगच्छदि । [ यथाहं तर्कये

गुरुदर्शनेनात्मानं कृतार्थीकर्तुमर्जुनो भगवता सहाचार्यसमीपमुपगच्छति । ] ( निष्क्रान्तः । )

## प्रवेशकः ।

( ततः प्रविशतो यथानिर्दिष्टौ कृतमंगलौ कृष्णार्जुनौ । )

अर्जुनः—भगवन् । विश्रब्धोऽपि भवद्वचसि संशयितमिवोपलक्षयाम्यात्मनो व्यवसितम् । कुतः

मन्ये तृणाय नाहं तां शल्यकर्णकृपत्रयीम्
आचार्यश्चेन्निरुध्येत स्वीकृताद्दृढसंगरात् ।

न च स निरोध आचार्ये संभाव्यते ।

कृष्णः—वयस्य मा मैवम् ॥

त्रिलोक्यामपि योऽजय्यो वीरो भीष्मः पितामहः
तत्रापि प्राभवद्दैवमाचार्ये प्रभवेन्न किम् ।

अर्जुनः—शांतं पापम् । आचार्योऽर्जुनेन समरे पातित इति मनसोऽप्यसह्यमर्जुनस्य । अतीर्णप्रतिज्ञोऽहं पावकं प्रविशेयं न त्वीदृक्पापमध्यवस्येयम् । न चाचार्यस्य पराजये पितामहस्येव क्वापि विशेषा प्रतिपत्तिः ।

कृष्णः—ननूक्तपूर्वमेव मया निमित्तमात्रं त्वमसीति । न हि भवितव्यं वारयितुं शक्यते । भवंति च सर्वत्र भवितव्यानां द्वाराणि । आचार्यं प्रति तावद्यथानिर्दिष्टं प्रतिपद्यस्व । उपचारमात्रमपीदं समीहितफलाय कल्पेत । ( विलोक्य ) वयस्य पश्य पश्य । एषोऽस्मदवलोकनमात्रेण समुपजातगुरुतरानंदपारिप्लवलोचनस्त्वरया समुच्चलन्निव क्षितेः

स्नेहामृतेन तव मूर्तिमिवाभिषिंचन्
त्वामापिबन्निव समुत्सुकलोचनाभ्याम्
पित्रोरपि प्रणयितामतिशय्य भूम्ना
हर्षात्प्रसन्नवदनो गुरुरभ्युपैति ।

अर्जुनः—अहो वात्सल्यस्य प्रभावः ।

योऽयं बिभ्रदरातिपक्षकटकप्राग्भारभूमिं गुरुः
कर्तुं भूमिमपांडवामिव रणे सज्जोऽस्ति सत्यव्रतः
स्नेहोत्कर्षवशाद्विलीन इव मामालिंगितुं स स्वयम्
गृष्टिर्वत्समिवालोक्य रभसादायाति हर्षान्वितः ।

( ततः प्रविशति सौम्यवेशो द्रोणः )

द्रोणः—( कृष्णं विलोक्य ) हंत हंत सिद्धाः सकला अद्य मनोरथा अस्माकम् ।

निगमांतवेद्यमिह दुर्लभं नृभिः
परमं रहस्यमखिलं सदार्थितम्
तदिदं महः करुणयाभिलक्ष्य माम्
समुपस्थितं स्वयमिहोदिधीर्षु यत् ।

अधर्मतापतप्ताया उद्धारे निरता भुवः
दिष्ट्या स्वयं प्रपन्नेयं नरनारायणद्वयी ।

भगवन्कृतकृत्योऽद्य भारद्वाजो भवच्चरणौ वंदते ।

कृष्णः—आचार्य विपरीतमिदम् । तथापि विदितवेदितव्येभ्यः सिध्यतु वः पारमिकं ज्योतिः । वयस्य वंदस्व कल्याणानाचार्यपादान् ।

अर्जुनः—तात एवं कृतांतेनाचार्यविरुद्धसंकल्पापादनेनापराधितः पार्थः प्रणमति ।

द्रोणः—( बाहू उद्यम्य ) फलंतु वत्सं प्रति नः शिवानुध्यानानि ।
( आत्मगतम् ) अहो विप्रतिषिद्धत्वं भावानाम् ।

उपात्तरणकर्मणे स्फुरणशालि बाह्वोर्युगम्
किरीटिपरिरंभणे भवति कंटकैरावृतम्
मनोऽपि दधदुग्रतां विनयमस्य दृष्ट्वामयि
विलीनमिव सर्वथान्यथयति प्रतीपां धियम् ।

( प्रकाशम् )

एहि जात दृढं परिष्वजस्व माम् ।

सिद्धे दीर्घतरे तपस्यधिगते दिव्ये च भोगे दिवि
स्वांते गाढसमाधिनोद्भवति यो हर्षप्रकर्षश्च वा
तत्तुल्यः खलु कोऽपि वा तदधिकः सच्छिष्यसंदर्शना-
दानंदातिशयो गुरुं प्रवणयन्संतर्पयत्यात्मनि ।

कृष्णः—एवमेतत् ।

आप्राचीनमतं कुशाग्रधिषणः शास्त्रं स्वयं बुद्धवान्
सिद्धांतान्विदधन्नवान्गुरुरसावुक्तो विनेता ध्रुवः
तच्छिक्षां विशिनष्टि यो निजधिया संतोषमापादयन्
आत्मेवाधिकतां गतः प्रियतरः शिष्यो न किं स्याद्गुरोः ।

अर्जुनः—एवं वात्सल्यातिशयकृतार्थोऽपि तातेन क्षीणसंततिः कृतोऽस्मि

मंदभाग्यः । ( रोदिति । )

द्रोणः–( सोद्वेगम् ) अंहह यदेव दुःस्मरं तस्यैव स्मारितोऽस्मि ।

सर्वेषु धन्विषु यथा प्रथमः किरीटी
जातस्तथैव तनयोऽस्य महाप्रभावः
तद्विक्रमप्रथनमंतकरं च तस्य
व्यूहं विधाय विजये न कथं त्रपेय ।

कृष्णः–आचार्य वयस्य । अशोच्योऽसौ वीरवरपथमनुप्रपन्नः अत्यन्तं स्वधर्मचरणेन सफलीकृतजन्मलाभः । स तु क्षत्रियबटुस्तेन दैवकृतेनावदानेन शूरमानी पांडवांस्तृणीकरोति कूटेन च धनंजयवधे प्रयतत इति सर्वथैवाक्षम्यम् ।

द्रोणः–कथं कूटेन वत्सवधे प्रवृत्तो जयद्रथः ।

कृष्णः—अथ किम् । तन्नृशंसकर्मणि नियुक्तेन केनापि रक्षैवं प्रतिपन्नम् ।

द्रोणः—धिक् क्षत्रियाधम वृद्धक्षत्रकुलपांसन जयद्रथ नैष त्वं चिरं भविष्यसि ।

अर्जुनः–आचार्येण तु स्वयं प्रतिपन्नेऽस्य रक्षाविधौ कुतोऽस्य चिरभावसंदेहः ।

कृष्णः–अमोघवाचो भगवंतो ब्राह्मणाः । विशेषेण भगवान्भारद्वाजः । अपरिहार्यफलेयं शापोक्तिः ।

द्रोणः–स्वयमुपनिमंत्रितविनाशस्य विनाशनिवारणे को विघ्नः प्रभवेत् । न चास्मत्प्रतिज्ञातं स्खलिष्यति । सर्वात्मना ह्युपात्तपक्षोऽस्माभि-

विंधर्तव्यः । अपरं च

अपहाय समरसमयं वृत्तं वीरस्य नोचितं समरे
तत्र प्रेमनिबंधनमेकं विजयार्थमुद्यमनम् ।

कृष्णः—वयस्य वंदस्वाचार्यपादान् । कालो ह्ययं संनहनस्य ।

अर्जुनः—( अभिवादयन् ) अनुग्राह्योऽहं गुरुभिस्तत्तच्छिक्षाप्रयोगदर्शनेनाद्य समरभूमौ ।

द्रोणः–यदिच्छामि ते तदस्तु । वयमपि यावत्प्रकर्षमद्य वत्सेन सह योद्धुमनसः । तदशिथिलप्रयत्नोऽस्तु वत्सस्यारंभः । मां चेदतिक्रमिष्यसे तदा जयद्रथस्याद्यावसितं जीवितम् । नान्यथा ।

कृष्णः—साधयाव आवाम् । ( निष्क्रांतौ कृष्णार्जुनौ ।)

द्रोणः–कः कोऽत्र भोः ।

( प्रविश्य )

द्वाःस्थः—विएदु कुरुसेणावई । [ विजयतां कुरुसेनापतिः । ]

द्रोणः—यावत्समराय संनद्धो भवामि तावद्दर्शनार्थमुपगताः प्रतिहार एव तिष्ठंतु । (निष्क्रांतः ।)

द्वाःस्थः—तह । [ तथा ] ( परिक्रामति )

( प्रविश्य )

जयद्रथः–दंडिक आवेद्यतां भारद्वाजाय दर्शनोत्सुकः सिंधुराज उपायात इति ।

द्वाःस्थः–सिंधुराज । दाणिं एव्व अब्भंतरप्पविट्ठो तत्तभवं कुरुसेणावई मं अण्णत्तवं दंसणत्थं उवगदा अम्हाणं आअमणं जाव इहज्जेव्व चिट्ठदु त्ति । ता भवं इह पडिहारे ज्जेव अवट्ठादुं अरिहदि । (निष्क्रांतः ।)

[ सिंधुराज । इदानीमेवाभ्यंतरप्रविष्टस्तत्रभवान्कुरुसेनापतिर्मामाज्ञप्तवान्दर्शनार्थमुपगता अस्माकमागमनं यावदिह प्रतिहार एव तिष्ठंत्विति । तद्भवानिहावस्थातुमर्हति । ]

जयद्रथः—अहो अपशकुनमिवावसरप्रतिपालनमस्मादृशस्य । किं तु द्रोणदर्शनाकांक्ष्यपि सावलेपोऽहमिमां प्रतिपालनवेलां विश्रामकरीं मन्ये। न ह्यात्माभिमानं रक्षता कथमात्मपरित्राणे स स्वमुखेन विज्ञाप्य इति सम्यङ्निर्णीयते मया। यदा च तेन उलूकहतकेन व्यपगलितधैर्येणास्मत्सेवावृत्तिमुज्झता तस्यार्जुनहतकस्य मयि चिकीर्षितमावेदितं तदाप्रभृति नष्टसंज्ञ इवानीशोऽस्मि निजगात्राणां संवृत्तः । तदस्य सेनापतेरुपगमनं यावत्स्थिरीकरणीयो मयात्मा। ( निश्वस्य ) यथा यथा चात्मानं समीक्षे तथा तथा पात्रभूतमिवात्मानमनर्थानां पश्यामि ।

प्रथममथ कृतागा द्रौपदीधर्षणेन
पुनरुपहतकीर्तिः कूटमुत्पाद्य पार्थे
शरणमुपगतस्तद्गृह्यमाचार्यमद्य
न वचनमपि वक्तुं धैर्यलेशं बिभर्मि ।

न त्वात्मगौरवं लघूकर्तुमिच्छामि । कपटसंवर्धिता हि राजनीतिः। इदं च प्राप्तकालम्

न रिपुणा सह योद्धुमना अहं
न समराच्च पलायितुमुत्सहे
अगतिकः स्वपराक्रमदुर्बलः
कमुपयामि शरण्यमिहेतरम् ।

कृतकर्मानुशयादेतावती भीतिः । अति हि नाम बीभत्साः संसारव्यतिकराः ।

जनश्छिद्रान्वेषी विदितयशसः स्यादसहनः
न संपत्स्वाश्वासोऽपगमभयहेतोश्च सततम्
शरीराणां ग्लानौ विषयविधुरं ताम्यति मनः
सुखाद्दुःखं मृत्युर्जननमनु जीवं ग्लपयति ।

अहो अस्य मोहहेतुत्वं ब्राह्मणसंनिवेशस्य । यन्नीतिनैपुण्यसुसंदृष्टान्यपि पूर्वाचरितानि अत्र स्मृत्वा तपस्वीव स्वात्मनि दोषदर्शी वैक्लव्यमुपगतोऽस्मि ।

अर्थकामफला राज्ञां नीतिः सर्वत्र दृश्यते
धर्मोत्तरा तु विप्राणामदृष्टफलकांक्षिणाम् ।

तदित्थं कार्पण्यविकलः कथमिमं धर्मावष्टब्धमाचार्यमुपस्नेहयामि ।

( ध्यायन्नास्ते । )

( प्रविश्य समरसज्जो द्रोणः )

द्रोणः—( आत्मगतम् )

धर्मो गुहानिहिततत्त्व इति प्रसिद्धि-
रद्यानुभूयत इव प्रथमं मया सा
शिष्यं यतः प्रियतमं समरे विरोध्य
पापस्य रक्षणविधौ कृतसंगरोऽस्मि ।

जयद्रथः—( उत्थाय ) अये तत्रभवानाचार्यः । आचार्य

सुविक्रांतारंभैरहमतुलजन्यव्यतिकरे
प्रथां नीत्वात्मानं श्रमविगलितौजा इव मनाक्

अजय्यः सिंधूनां पतिरभिलषन्विश्रमसुखम्
स्वरक्षार्थं प्राप्तः शरणमिव वंदे बलपतिम् ।

आचार्येणास्मद्गुणग्राहिणा स्वयमस्मच्छरीररक्षांगीकृतेत्यनुगृहीतोऽस्मि।

द्रोणः-धिगिमां मोघात्मश्लाघाम् । जयद्रथ श्रूयताम् ।

कुरुपतिकार्यस्य वशाद्रक्ष्योऽसि ममाद्य कालवशगोऽपि
नानुग्रहधीः शक्या त्वयि यावत्त्वं न पातकद्वेषी ।

किं हि नाम तेऽनुग्रहार्हत्वम् ।

पतिव्रताधर्षणमुग्ररूपम्
कूटप्रयोगो युधि चार्यवीरे
वृद्धावहेला नृपवंचना च
सिद्धस्तवैभिर्नरकस्य मार्गः ।

जयद्रथः-नन्वाचार्य अत्रापि भवति प्रतिवचनम् । एष तु कालोऽस्मन्मौनस्यैवोचितः । न वा मयापि न प्रकटितो निजप्रभावो यत्केवलं दोषैकदृशा भवताहं संभाव्ये ।

द्रोणः—दुरात्मन् । आत्मप्रभावप्रगल्भनेन भगवतो वरगौरवमपलपसि।

क्वासन्नद्यावधि गुरुगुणाः शौर्यधैर्यादयो ये
राजन्येषु प्रसवसहजा युद्धभाजोऽपि ते ते
जित्वा माहेश्वरवरबलान्मोहमापद्य भूयः
सैनापत्ये विलुभितमनास्त्वादृशः कः कृतघ्नः ।

जयद्रथः-कदा नु पांडून्विहाय कुरुवीराणां गौरवमत्रभवता प्रशस्तमासी-

त् । अथाहं त्वद्य आत्मबलावलंबी युद्धं दातुमसमर्थो निरुद्यमः क्वात्मानं स्थापयामि इति अस्योत्तरमुपश्रुत्य गंतुमिच्छामि । न च पार्थप्रतिज्ञाभयाद्रणादपयानं ममोचितम् । तद्धि कौरवपक्षस्य लाघवमेवाविष्कुर्यात् ।

द्रोणः—श्रूयताम् । व्यूहमुखप्रतिष्ठितस्य मम पार्श्वं विहाय त्वया नापेतव्यम् । अस्मत्पार्श्वस्थं त्वां कृतांतोऽपि धर्षितुमक्षमः किमुत पार्थः । अथ तु स्वकर्मदोषादन्यत्र यास्यसि न तत्र मे विभवस्त्वां त्रातुम् ।

( नेपथ्ये )

भो भोः कुरुसेनानायकाः । श्रूयतां धर्मयुद्धानुशासिनो घोषणा भगवतः कुरुसेनापतेराचार्यस्य ।

आसाद्यो रथिना रथीभगतिना चेभस्थितो यो भटः
सादी सादिनमाह्वयेत समरे पत्तिः पदातिं तथा
द्वंद्वे स्यात्सममायुधं न शरणं प्राप्तश्च वध्यो रिपुः
वर्ज्यः कूटविधिर्दिनास्तसमयाच्चोर्ध्वं निषिद्धो रणः ।

( कलकलः )

द्रोणः—( विलोक्य ) हंत हंत सिद्धा अक्षौहिण्यः ।

खड्गैश्चापैः प्रभातच्छुरितरविकरैस्तोमरैर्मुद्गरैश्च
कुंतैः प्रासैर्गदाभिर्विविधशरफलैस्तेजनैरस्त्रशस्त्रैः
हेषाचीत्कारवद्भिः करितुरगबलैः स्यंदनैर्मंद्रघोषैः
शंखाध्मानैश्च दावानल इव तुमुलो दीप्यते सैन्यचारः ।

गम्यतां स्वरथेन व्यूहमुखं प्रति अस्मत्संनिकृष्टम् ।

जयद्रथः—विजयतामाचार्यः । ( निष्क्रांतः । )

द्रोणः—विजृंभतां ब्रह्मजुष्टः क्षात्रो धर्मः । तथा हि

शरनिकरनिकृत्तैरुंडमुंडैररीणां
व्यतिकरितरणोऽहं शीर्णकीर्णांगखंडैः
अनयजनितरोषात्क्षत्रसंहारकामम्
विशसनकृतदीक्षस्तर्पयाम्यद्य कालम् ।

आश्वासो नाम पंचमोऽकः ।

# वीरधर्मदर्पणनाटकम् ।

## षष्ठोऽङ्कः ।

( ततः प्रविशति सौम्यवेशेन संजयः । ]

संजयः—आवेदितो मया तत्रभवते प्रज्ञाचक्षुषे कौरवपतये धृतराष्ट्राय जयद्रथवधमुद्दिश्य कृतामर्जुनप्रतिज्ञां तन्निवारणाय च सांतरामाचार्यप्रतिज्ञां यावत्सकलोऽपि युद्धवार्ताविस्तरः । उक्तश्चाहमनेन यथा संजय अद्यातीव सोत्साहः संग्रामो भविता तत्त्वया सर्वेऽपि ते ते विशेषा यावद्दिनांतं प्रत्यक्षीकर्तव्या यथापूर्वं च सर्वं दिनावसानेऽविलंबेन ममावेदयितव्यमिति । सोऽहमिदानीमुभयसेनाव्यतिकरनिरीक्षणोचितप्रदेशे विरचितसंनिवेशः प्रवर्तमानं संग्राममभिपश्यामि । ( परिक्रम्य विलोक्य च ) हंत प्रवृत्तोऽभियोगः । ( नेपथ्ये कलकलः । ) अहो नु खलु भोः । अतरांतरा विलीनानां महोदधिकल्लोलानां मुहुर्मुहुरुत्क्षोभ इव वर्धतेऽयं वीराणां संरंभः । तथा हि

संपातस्तीव्रवेगो द्युतिखचितादिशां भास्वराणां शराणाम्
फूत्कारैर्झांकृतैश्च प्रतिहतिरटितैः पूरयत्यंतरालम्
उत्क्रोशाश्चा समंतात्करितुरगरथाघातघोषैर्विमिश्राः
श्रूयंते युद्धभाजां भुजकलितगदाखड्गमिश्रायुधानाम् ।

अपि च

भुवः सरभसोत्थिते रजसि सांद्रनीहारवत्
तिरस्कृत इतस्ततः श्रवणमात्रवेद्यो रणः

समुच्छलितलोहितैश्च भुवि पंकिलायां पुनः
सकृष्टमिव वर्धते प्रकटितातिभीमोद्यमः ।

अयं च रणैकदेशे वृत्तस्योयाधनस्य प्रकारः ।

विद्धांगानां स्वगतकरुणैर्दैवनैर्विह्वलानाम्
प्रेताप्रेतव्यतिकरभयोद्वेगमूर्च्छोन्मुखानाम्
एकत्रैवापतितनिहतेभोष्ट्रसाद्यादिकानाम्
दृष्ट्वावस्थां द्रवति हृदयं बाह्यतः प्रेक्षितुर्मे ।

ननु जितमिव कौरवैरद्य सविशेषोत्साहेनाचार्यप्रभावेण । कोऽस्य पुरतः प्रतियोधाः । ईदृशेनापि सहयुध्वनां प्रथिततरं भवति यशो नु पांडवानाम् । कुतः

यदि गुरुरभविष्यत्पांडवानां सहायः
समरमिदमकल्प्स्यन्न प्रभावाय तेषाम्
विजितनिजविपक्षो लीलयाचार्य एकः
करगतमकरिष्यद्राज्यमेषां यतोऽयम् ।

अये एष स श्रीमान्संनिकृष्टनिलीनस्य भीतभीतस्य जयद्रथस्य परित्राणतत्पर एकवारोद्यमिनामपि पार्थप्रमुखानां पांडवातिरथानामभ्यागमं महोग्रप्रभावेण विफलीकरोति । गरीयांश्चारब्धोऽनेन पांडवचमूनां संहारः । अपि न पुनः क्षत्रशून्या भवति भूतधात्री । अथवैवमेवेष्टं किल कृतांतस्य ।

षट्कर्मा श्रोत्रियोऽयं शमदमनियमानास्थितः कर्मबंधैः
कैरप्युद्भावितेर्ष्योऽकुरुत कृतमतिर्हस्तसाद्युद्धतंत्रम्

शापे चापेऽप्यथैनं निपुणमुभयथोद्वीक्ष्य संहारकामः
क्रूरः कालो नियुंक्ते हवनविधिषु नु प्रस्तुते क्षत्रसत्रे ।

कति कति हीमे क्षत्रियाः

शौंडाः स्वकर्मणि रणेषु सुवर्चसोऽपि
तद्ब्रह्मवर्चसमुपेत्य विलीनशौर्याः
सद्यो हतत्विष इवास्य रथं विहाय
सव्यापसव्यनिभृता इतरैर्यतंते ।

नूनं तावदेव कुशलमस्य लोकस्य यावच्छमवंत एते ब्राह्मणाः ।

एकेनैव निपातितो हि नहुषोऽगस्त्येन रोषात्मना
नन्वेकेन च भार्गवेण विजितास्त्रिःसप्तकृत्वो नृपाः
एकेनैव पदाहतश्च भृगुणा लक्ष्मीपतिर्वक्षसि
धत्तेऽमुं सहभूतभूषणमिव प्रेम्णा पदांकं सदा ।

एष पुरस्कृतवासुदेवसारथिरर्जुनोऽपि नामैनमनभिद्रुत्य निर्व्यापार इवापसव्यं गंतुकामो मार्गमेवाभिलषन्नास्ते । संभाव्यते चात्रावसरे श्रीमतो वासुदेवस्य रथसंचरणनैपुणेन परिहृत्यैवाचार्यमेष जयद्रथ-रथमाचार्याद्विश्लेषयिष्यतीति । ( विलोक्य ) हंत हंत नन्वेष सात्य-किप्रमुखेन महता वीरनिकरेण वेगवताभिद्रुतः कुरुपतिप्रेरणावशात् तीव्रं रोषमाहार्य विहाय सैंधवरथं सर्वात्मनैनानभ्यापतति प्रचंडक-र्माचार्यः । लब्धं तावद्भगवता वासुदेवेन रंध्रम् । अतीतश्चाचार्यमार्गं पार्थरथः । विश्लिष्टश्च जयद्रथस्यंदनो बलौघैर्नाचार्यसमीपमुपैतुं प्र-भवति । निर्व्यूढ इदानीं मन्युर्धनंजयस्य ।

एकतः सिंधुराजोऽयमाचार्यो दूरमेकतः
उभयोर्मध्यमासन्नः पार्थस्त्वरितसारथिः ।

दर्शनीयोऽयमिदानीं व्यतिकरः । अल्पशेषश्च दिवसस्त्वरयति उद्य-ममनयोः प्रकुपितयोः । तत्समीपतरदेशमासाद्य पश्याम्येनयोर्व्यव-सितम् । ( निष्क्रांतः । )

विष्कंभकः ।

( ततः प्रविशतो रथारूढौ कृष्णार्जुनौ )

अर्जुनः—भगवन्सत्यमुक्तमासीत्पितामहेन न शक्यमाचार्यः समरे पराभवितुमिति । इदानीं तु

आचार्यस्य च पाप्मनोऽस्य च रिपोर्विश्लेषणं दुष्करम्
सिद्धं सात्यकिकल्पिताद्भिगमात्त्वन्मंत्रतो निश्चितात्
आसाद्य त्वरयास्य तं रथमयं यावद्र्विदृश्यते
हत्वैनं तरितास्मि तावदपि वात्मीयां प्रतिज्ञामहम् ।

अल्पं हि अवशिष्टं दिवसस्य । आचार्यादंतरितोऽपि समरपरिहार-परायण इव दूरतः संचारयति निजरथं सैंधवः । तद्यथा कालहा-निर्न भवति तथा त्वरयितव्यमस्माभिः ।

कृष्णः—वयस्य कितवाग्रणीः सैंधवः कालहरणेन समाप्तभूयिष्ठं दिवसं समापयितुं यतते । येन युद्धसमयेनाभियोगावसानं प्रतिज्ञा-विघाताच्च भवत आयुषोंऽतं दुरात्मोत्प्रेक्षते । एषोऽस्य ध्वज उपलक्ष्यते तत्राचिरात्त्वां प्रापयामि । ( रथवेगं निरूप्य ) ननु प्राप्तकालो ऽप्रमान्मुमूर्षुरिव स्वयमितोमुखमेव प्रेरयति रथं सैंधवः । तत्सज्जो

भव कृतसंधानः । एष वाग्विषयीभूतो दुरात्मा ।

अर्जुनः—( गांडीवमास्फाल्य ) अरे रे सैंधवापसद नरपशो क्वेदानीं यास्यसि ।

नन्वेष ते वधसमुद्यतभीषणास्त्र-
स्त्वां प्रेषयामि परलोकमितोऽवपात्य
आयांतु नाम तव रक्षणधार्ष्ट्यकामाः
सार्धं त्वयानुभवितुं विनिपातमद्य ।

वयस्य किमिदं नाम । आहूतोऽपि परिहरन्सव्यतोऽधिकतरवेगेन रथेन पलायत इव क्षत्रियाधमः । तद्द्रागनुस्त्रियताम् । ( रथेनानुसरन् ) अरे अरे रणभीरुक क्षत्रियबंधो युद्धं विहाय पलायसे नाम ।

( प्रविश्यान्यतो रथेन जयद्रथः । )

जयद्रथः—सूत प्रेरयाश्वान् । अभ्यापतति मां वेगेनासौ पशुपालसारथिः । त्वरयस्वास्मद्रथमाचार्यसमीपम् । पश्चादेनमभिभाषिष्ये ।

सूतः—आयुष्मन् विप्रकृष्ट इदानीमाचार्यो व्यवहितश्च शत्रुबलैः । आसन्नश्चाभियोक्तुमायातोऽर्जुनः । तत्परावृत्य युद्धदानमेवोचितम् । नापयानमिदानीं शक्यम् ।

जयद्रथः—कथमेवं नाम । त्वामेवादौ व्यापादयिष्ये स्वामिघातिनम् । नैव वा रथेन मे प्रयोजनम् । एष पादचार एवाचार्यमासादयेयम् । ( खड्गहस्ता रथादवप्लुत्य विलोक्य च ) अहो अत्याहितम् । एष रथेन प्रत्यासन्नो दुरात्मा क्षणान्मामासादयिष्यति । अहो बत चित्रम् नैतद्दिनमद्यापि समाप्यते । ( सूतो रथेनानुसरति । )

अर्जुनः—अरे तिष्ठ तावत् । एष हतोऽसि ।

जयद्रथः—अरे पांडववटो धर्मप्रलापिन् । युद्धसमयं विहाय खड्गैकहस्तं रथस्थो धनुर्धरो मां योधयितुमिच्छसि । ( परिक्रामति । )

अर्जुनः—भगवन्दुरात्मापि न्याय्यं ब्रवीति । तदेष खड्गधर एव रथादवतीर्य द्वंद्वक्षमां भूमिमासाद्य पदातिरेनं द्वंद्वेन योधयित्वा च्छिन्नशीर्षं करोमि । अनुजानातु मां भगवान् ।

कृष्णः—वयस्य अधर्मपरेऽप्यरौ यथाधर्मं योद्धुकामोऽनुमन्यसे मया । न तु कालो यापयितव्यः । रथविहानं जयद्रथेन कालहरणायैवानुष्ठितमिति मन्ये । विप्रकृष्टश्चैतावतावसरेण दुरात्मा ।

अर्जुनः—( खड्गहस्तो रथादवतीर्य ) अनुयातु रथेन भगवाननुसरंतं माममुं युद्धापहारिणम् । ( त्वरितक्रमं परिक्रम्य ) ननु अरे पलायनपटो दुरात्मन् । किमिदानीं पलाय्य लभ्यते । एषोऽहं पदातिनं पदाती खड्गधरं खड्गधरः उपगतस्त्वाम् । अनुचितमिदानीं पलायनं क्षत्रियस्य ।

जयद्रथः—( इतस्ततः प्रधावन् ) अहो आचार्य अरे कौरवसेनानायकाः । अरे कृतघ्नाः कर्णकृपशल्याश्वत्थामकाः । न केऽपि नाम मम साहाय्याय संनिहिता भवथ । तद्यावदस्य क्रूरस्य हस्तगतो न भवामि तावद्रथेनात्मानमंतरयित्वा कालविलंबं संपादयामि । ( तथा कुर्वन् ) एष मुहूर्तमात्रसमयो यापितश्चेत् चिरजीवितं जयद्रथेन मृतं च दग्धात्मना अर्जुनहतकेन । ननु भो अस्ताचलातिथे दिवाकर

क्रूरस्त्वं भवसि नु मत्प्रणाशकामो
मंदत्वाद्यदतिविलंबसे स्वमार्गे

याह्यस्तं भवतु तनोर्ममाद्य भूतिः
न श्वोऽहं खलु भवितास्मि संयुगेऽस्मिन् ।

सूतः—( स्वगतम् ) क्षत्रधर्ममतिचरतः आत्मविनाशव्यंजिकैव निर्गता वाणी ।

कृष्णः—न क्षममितः परं कालं हर्तुम् । परिहरति युद्धं निमित्तान्वेषी जयद्रथः ।

धर्मसंस्थापनार्थाय संभूतस्यात्मकामतः
येन केनाप्युपायेन हंतव्या मम दुष्कृतः !

साधूनां च परित्राणाय मुहुः कृतावतारैरस्माभिर्मायामुत्पाद्य पार्थकार्यं निर्वाहणीयम् । भवतु च क्षणैकं संजाताश्वासो धृष्टतरो विश्रंभेण दर्शितात्मायं शठः । येन निमेषमात्रेण मायां संहृत्यैनं सद्यः पार्थत्राणेन शीर्षच्छेद्यं करोमि । ( सूर्यमभिलक्ष्य ) यातु भगवान्कंचित्कालमदृश्यताम् । भवतु चाचिरादस्तमयमोहो युद्धभाजाम् । वयस्य त्वरस्व त्वरस्व अयमस्तमेति भगवानंवरमणिः ।

अर्जुनः—( प्रधाव्य ) ननु एष आसादितोऽसि । नेदानीं पलायितुं शक्यते । ( जयद्रथरथमुपेत्य ) एषोऽहं सद्य एव त्वां व्यापादयामि ।

सूतः—क्षत्रधर्मं त्यक्तवतः पलायनपरायणस्य नाहं पक्ष्यः । धर्मयोधिनं शरणं त्वामुपगतोऽस्मि ।

अर्जुनः—शरणमुपगतो भवान्न मे वध्यः । क्वासौ पापः शृगाल इवापह्नुवान आत्मानं परिहरति द्वंद्वं क्षात्रियब्रुवः । ( जयद्रथं रथांतरेण निरूपयन् ) अरेरे क्षत्रियकुलाधम जाल्म एष आसादितोऽसि । चिंत्यतामात्मा-

भिन्नं नरकद्वारं येन विविधापचारनिर्यातनाय यातना अनुभवितुं प्रवेक्ष्यसि । युद्धं दद्वा विधेहि भानुमंडलभेदं यावन्नास्तमितः स देवः । तथा हि

एष त्वां वरबलघातिताभिमन्युम्
पांचाल्या दुरितमते कृताभिमर्शम्
सद्योऽहं शितकरवालकृत्तकंठम्
आतिथ्येऽभिमतनिकेतनं हिनोमि ।

( नेपथ्ये )

भो भोः समरोत्सवप्रसिता महावीराः ।

विश्रामदोऽत्रभवतामुपसंहरन्नु
युद्धक्रमं सपदि संहृतबिंब एषः
अस्तं प्रयाति किल दत्ततमोऽवकाशः
सूर्योऽर्जुनव्यवसितं विफलं विधाय ।

( जयद्रथः पुरतः संचरति । अर्जुनश्चोद्यतखड्ग एनमभ्युपैति । )

( पुनर्नेपथ्ये )

दृष्ट्वाद्भुतक्रममुपागतमस्तशैलम् ।
भानुं विशेषचटुलैर्गरुतां प्रयत्नैः
चंचूप्रलंबि दधतोऽर्धनिगीर्णभक्ष्यम्
वासस्थलान्यभिपतंति पतत्रिसंघाः ।

आज्ञापयति च तत्रभवान् कुरुसेनापतिराचार्यः ।

असावस्तमितो भानुः संहर्तव्यं निजायुधम्
विजितं कौरवैरद्य मोघः पार्थस्य संगरः ।

जयद्रथः—( सधैर्यं स्वगतम् ) मृत्युमुखान्मुक्तोऽस्मि ।

अर्जुनः—( खड्गं विसृज्य ) हा धिक् हा धिक् वंचितोऽस्मि किल कालेन । ( विषादं नाटयति । )

जयद्रथः—( खड्गमुद्यम्य ) अरे रे मूर्ख वृथात्मश्लाघिन् । क्षत्रियबटो विराटागारनट षंढतिल मृत्युभीतं मां गणयसि । एषोऽहं दर्शितात्मा तव पुरः स्थितोऽस्मि । शीर्षच्छेद्यो नामाहं ते । अथवा त्वमेवेदानीं मम शीर्षच्छेद्योऽसि । ( हंतुमुद्युंक्ते । )

सूतः—( खड्गं जयद्रथकरादाकृष्य ) धिगधर्मव्यवसितम् ।

जयद्रथः—भो भोः कुरुवीराः । एष जीवति स्वविक्रमावलंबी सिंधुराजः । मा भैष्ट । इहागम्य प्रत्यक्षीक्रियतामस्य मुमूर्षोरग्निप्रवेशकार्पण्यं सर्वैरपि मया सह । ( अर्जुनं प्रति ) अरे रे आजन्म दरिद्र तापस न खलु क्षात्रियाधमोऽहम् । एष द्वंद्वयुद्धाय सज्जोऽस्मि । युद्धसमयेन तु विरम्यतेऽद्य मया । श्व एतद्भविष्यति । सांप्रतं तु ते प्रथमं दग्ध्वात्मानं हुतवहं तर्पयितुम् । न चेत्प्रतिज्ञातपरिहारेण स्वपितॄन्नरकं नेतुमीहसे ।

कृष्णः—( उपेत्य ) सैंधव दैवेन तावत्प्रत्युज्जीवितोऽसि । किमिदानीमात्मदहनैककार्यशेषमिमं पुनः प्रोत्साह्य । दृश्यतां सर्वैरपि युष्माभिः प्रेक्षकैर्यथाधर्ममस्याचरितम् । धर्मैकप्रिया वयं पावकप्रवेशमपि सहर्षमंगीकुर्मः ।

अर्जुनः—( सखेदम् ) किं चेदानीं कालहरणेन वृथाजीवितविलंबितेन च ।

भगवन् । समिध्यतां देवो हुताशनः ।

कृष्णः–( स्वगतम् )

उपकल्पित एषोऽत्र मया मायाहुताशनः

विश्रंभादुल्बणः पाप्मा यावत्संनिहितोऽत्र नः ।

( प्रकाशं निश्वस्य ) सूर्यास्तमयं दृष्ट्वा समिंधितो भवदनुमरणकामेन मया भगवान्पावकः । तत्त्वरस्व सुक्षत्रिय इव संहितबाणं गांडीवमादाय विजेतुं धर्मद्वारेणामुं लोकम् ।

( गांडीवं सशरमस्योपनयति । )

सूतः–अहो अत्याहितं महावीरस्य । इदं च धर्मशीलत्वम् ।

अर्जुनः–( सवैक्लव्यम् ) एष सज्जोऽस्मि ।

कृष्णः-इत इतः । ( सर्वे परिक्रामंति ।)

जयद्रथः–( सेनाभिमुखम् ) इत इतः । इत इतः । इत इतः । सूत सविशेषालंकृतमस्मद्रथं कृत्वोपस्थापय । यत्रोपविष्टः पार्थहतकस्य देहदाहं प्रत्यक्षीकरोमि ।

( निष्क्रांताः सर्वे । )

माया नाम षष्ठोऽङ्कः ।

## वीरधर्मदर्पणनाटकम् ।

### सप्तमोऽङ्कः ।

( ततः प्रविशति प्रतोदहस्तेन कृष्णेनानुगम्यमानः सशरचापोऽर्जुनः । )

अर्जुनः–( सकरुणम् ) अहो नु खलु भोः ।

संरंभवानरिवधाय समुद्यतोऽहम्
कालभ्रमादिव विलंबितकार्ययोगः
दैवेन वंचितगतिर्मुषितः प्रसह्य
कर्तव्यशेषमधिकृत्य विमोहितोऽस्मि ।

अथ वा नैवेदानीमात्मदहनादन्यन्मेऽवशिष्टम् ।

व्यर्थाः खांडवदाहतृप्तहुतभुग्दत्ताः प्रसादा इमे
श्वेताश्वः कपिकेतनो रथवरो गांडीवचापोऽप्ययम्
व्यर्था पाशुपतास्त्रसिद्धिरधुना प्रेष्ठा वधाय द्विषाम्
चित्रा दैवगतिर्न केनचिदपि प्रत्यूहितुं पार्यते ।

कृष्णः–भो भोः पांडवपृतनानायकाः । एष आत्मप्रतिज्ञाविघातात्सत्यवागर्जुनो हुतवहं प्रविशति । तदत्रभवतो बहुमानार्थं सोत्साहं व्यूह्य शस्त्रास्त्रसिद्धां चतुरंगसेनामुपस्थातव्यं सर्वैरपि युष्माभिः । व्यवस्थाप्यानुपाल्यतां च प्रेक्षकवर्गः ।

( नेपथ्ये )

हंत भो हंत पार्थप्रतिज्ञाविघातमुपश्रुत्य सहसा परित्यक्तविजयाभिलाषं धर्मराजं पुरस्कृत्येमे शेषाः पांडवाः वीरपत्नीं सुभद्रां पुरस्कृत्य पांचाली-

प्रभृतयः पांडवदाराश्च अर्जुनानुमरणकृतनिश्चया इत एवाभिवर्तंते ।

( ततः प्रविशति धर्मराजः अन्यतः सुभद्रा विभवतश्च परिवारः । )

धर्मराजः–( रुदन् )

यद्देवांश्च ऋषीन्पितॄंश्च नियमेनाराध्नुम श्रद्धया
यत्संतः प्रतिपूजिताः स्वविभवैर्यच्चार्जवं शीलितम्
संजातं विरजस्तमस्कचरितं सर्वं तदापत्फलम्
हा हा हंत कृतांत एव बलवान्सत्त्वं न भूत्यै भुवि ।

सुभद्रा–( रुदती ) धम्माणुपालणत्थं च्छत्तमग्गेण परलोअं गदो जीविदसमो मे वच्छो अहिमण्णू । एव्वं अ देव्वहदएण अज्जउत्तो वि वंचिदो पुत्तवहप्पडिआरप्पडिण्णाए । किं मम दाणिं जीविदेण । अणुमरिस्सं अज्जउत्तं परत्थ सपुत्तं अहिणंदिदुं । [ धर्मानुपालनार्थं क्षत्रमार्गेण परलोकं गतो जीवितसमो मे वत्सोऽभिमन्युः । एवं च दैवहतकेनार्यपुत्रोऽपि वंचितः पुत्रवधप्रतिकारप्रतिज्ञायाम् । किं ममेदानीं जीवितेन । अनुमरिष्यामि आर्यपुत्रं परत्र सपुत्रमभिनंदितुम् । ]

धर्मराजः–भगवन् यादवेश्वर

विनिहितरणभारा भूमिभारापहार-
प्रकटितनिजवीर्ये योद्धुमैच्छाम यस्मिन्
व्यपहतसकलाशा दैवदोषेण तस्मिन्
त्वयि भगवति नाथे सत्यनाथा अभूम ।

सुभद्रा–अज्ज वासुदेअ जुत्तं इदं णाम विस्सेस्सरं तुमं अस्सिदस्स अज्जउत्तस्स अम्हाणं अ मणोरहाणं एओरसण अणत्थेण णिप्फली-

करणं । [ आर्य वासुदेव युक्तमिदं नाम विश्वेश्वरं त्वामाश्रितस्यार्यपुत्रस्य अस्माकं च मनोरथानामेतादृशेनानर्थेन विफलीकरणम् । ]

कृष्णः–( उदासीन इव ) कृतांतोऽत्र बलवान् ।

अर्जुनः–( धर्मराजमभिवाद्य ) आर्य क्षंतव्योऽयमयशःकलंकितोऽकृतकार्यतयापराद्धः कनीयानर्जुनः । भगवदाश्रयादार्येण भीमसेनेन वत्साभ्यां नकुलसहदेवाभ्यां च समासादितराज्यश्रिरं वसुंधरामनुपालयत्वार्यः । स्मर्तव्यश्चाहं पांचाल्यादिभिः सर्वैरपि ।

सुभद्राः—एव्वं गए ण अज्जउत्ताणुमरणादो अण्णं मह इट्ठं । दट्ठव्वा भवंतेहिं वच्छल्लेण वच्छा मे आसण्णप्पसवा उत्तरा । [ एवं गते नार्यपुत्रानुमरणादन्यन्ममेष्टम् । द्रष्टव्या भवद्भिर्वात्सल्येन वत्सा मे आसन्नप्रसवा उत्तरा । ]

अर्जुनः—यथा ते रोचते ।

धर्मराजः—वत्स अर्जुन अयि वत्से किं जीवितेनास्माकमपीदानीं प्रयोजनम् । ननु सर्वेऽपि वयं वत्समनुगंतास्मः । पांचालीप्रभृतयोऽपि भवतीम् ।

( सर्वे परिक्रामंति । )

( प्रविशत्युज्ज्वलवेशो जयद्रथः । )

जयद्रथः–( साटोपमात्मानं निरीक्षमाणः परिक्रामति । ) अहो महोत्सवः ।

व्यपेतमखिलं भयं धवलितं यशो मेऽधिकम्
त्रपानतमुखा नमंत्युपहसंति ये मां पुरा
पुनः स्वयमुपागतो विजय एष मद्धेतुकः
स्वहस्तमरणाद्रिपोर्बहुमुखोऽद्य लाभोदयः ।

तादिदानीं स्वलंकृतं निजरथमारूढस्तर्पयाम्यरिमरणोत्सवदर्शनेनात्मनो नेत्रं रिपुयुवतिशोककाकलीश्रवणेन च श्रोत्रम् । ( परिक्रम्य रथमुपसर्पति । प्रविशति भूषितेन रथेन सूतः । ) सूत । अरिं शरणमुपेतो मृत एवासि त्वं धर्मभीरुः । तथापि रथस्यास्मच्छरीरस्य च मंडनात्प्रसन्नोऽस्मि ते । तत्तथा रथं स्थापय यथा सर्वेषामपि प्रेक्षितॄणामाश्चर्यदर्शनो गोचरीभूय द्रक्ष्यामि कृपणस्यारातेर्ज्वलनप्रवेशम् । ( रथमारोहति सूतश्च यथास्थानं तं स्थापयति । )

सूतः—( जनांतिकम् ) धिक् धिक् । दुर्जनस्योत्सेकः सज्जनस्य च विनिपात इत्यधरोत्तरमिदम् ।

कृष्णः—ननु वयस्य नेदानीं विलंबितव्यम् । आर्य युधिष्ठिर । दुर्धरेयं संसारकलना । यथाव्यवसितमंगीक्रियताम् । मरणं न कदापि शोकाय क्षत्रियाणाम् । ( परिक्रम्य ) एष भगवाञ्ज्वालामाली हुतवह उत्थित आलिंगितुमिव वयस्यमनुगंतॄंश्चास्मान् । ( अग्निमुपसर्पंति सर्वेऽपि । ) वयस्य स्मर्तव्यान्यात्मनः सुकृतानि स्थैर्यधैर्याभ्यां स्वदेहहवनेन च प्रसादनीयो देवो हुताशनः । अरिवधसंहितास्त्र इव सिद्धायुधः प्रदक्षिणीकुरुष्व भगवंतम् ।

जयद्रथः—( त्रासं नाटयन् ) किं नाम संहितेति ।

अर्जुनः—भगवन् भवत्प्रसादेनोन्मीलितमिव मर्मांतरं चक्षुः । तथा हि

त्यक्त्वा स्नेहान्स्वजनविषयान् राज्यलभ्यांश्च भोगान्
कीर्त्याशंसामपि च समरेऽरातिवर्गस्य नाशात्
आदेशात्ते पुनरिममुपादाय चापं सबाणम्
सिद्धोऽस्म्येष स्वतनुहविषा होतुमग्निं पुरस्तात् ।

कृष्णः–( स्वगतम् ) आसन्नो नैसर्गिकोऽस्तमयसमयः । आविरस्तु भगवान्निजक्रमानुसारी दिवसपतिः । ( प्रकाशम् ) भो भोः कौरव-पांडवचमूपतयः । ननु विलोक्यताम् । न भगवानस्तमितोऽहस्करः । कुतोऽप्यकालसमुद्भूतान्महामेघपटलव्यवधानात्कृतास्तमयमोहा युद्धाद्विरताः स्थ । सिद्धश्च सैंधवापसदं हतुं वीरो धनंजयः । अनुपाल्यतां स्वनियोगः । वयस्य किमुत्प्रेक्षसे ( सूर्यबिंबं दर्शयन् ) एष दीप्यते भगवान्सहस्रकिरणः । एष च कौरवसेनासूत्कटदर्शितात्मा जयद्रथाधमः । ( नेपथ्ये कलकलः । ) ननु महाराज युधिष्ठिर व्यूह्यतां वाहिनी रक्ष्यतां च सावधानमवरोधः ।

सर्वे–अहो माया योगेश्वरस्य । अंतर्हितोऽनलः । आविर्भूतश्च भूयो भानुमान् ।

धर्मराजः–एहि वत्से । ( निष्क्रांता सुभद्रा धर्मराजः द्वित्रवर्जं परिवारश्च । )

जयद्रथः–( रथादवप्लुत्य । ) अरे रे गोपालापसद ( प्रधावन् ) एष एनेन धूर्तेन वंचितोऽस्मि । एष घातितोऽस्मि ।

अर्जुनः—( जयद्रथमनुसरन् ) धिग् वृद्धक्षत्रकुलपांसन क्षत्रियापसद पतिव्रताधर्षणापावित्रितकलेवर सुदृष्टः क्रियतां लोकः । नेदानीमपयानं ते शक्यम् ।

योद्धारस्तव रक्षकाः प्रतिहता अस्मद्भटैः सर्वतः
आचार्योऽपि स दूरतो व्यवहितस्त्वामक्षमो रक्षितुम्
आकृष्टो निशितार्धचंद्रशरधृक्चापो वधायैष ते
नासावस्तमितो रविस्त्वमसि च प्राप्तोऽत्र मद्गोचरम् ।

दुरात्मन् वरबलव्यथागर्वित ।

यथा प्रयास्यन्विलयं प्रदीप-
स्तेजायते गौरवमादधानः
तथैव मृत्योः प्रथमं तत्रासीत
ओजायमानस्य नु स प्रकर्षः ।

तदिदानीम्

निर्भिन्नोद्वृत्ततारप्रविततधवलस्फोटकल्पौ कपर्दौ
अक्ष्णोर्निष्कृष्टमज्जाधमनिकृतगुरुग्रासपुष्यद्गलस्ते
त्वक्स्नाय्वंत्रास्थिसंधीन्खरतरनखरैस्तीक्ष्णतुंडैश्च कृतन्
शीर्षच्छेदाद्गरिष्ठामनुभवतु मुदं गृध्रगोमायुवर्गः ।

( नेपथ्ये कलकलः । )

जयद्रथः—अहो धिक् अहो धिक् । ( सोत्प्रासम् ) अरे रे नरपशो क्षत्रियबटो योऽस्मन्मूर्धानं भूमौ शातयति तस्य मूर्धापि शतधा फलति । अस्तीदमद्यापि पितृदत्तं तनुत्रांणम् । तदेषोऽपराङ्मुखो रणमवतरामि ।

( निष्क्रांतः । )

अर्जुनः—( अनुधाव्य बाणं विसृजन् ) अये पापिष्ठ । एष रुंडभूतो निर्वृतिं प्रतिपद्यस्व ।

( नेपथ्ये कलकलोत्तरम् )

अरेरे दुग्गइपत्तभूद जमणअरादिहिअ । ण सज्जणे अणत्थजोआ पहवंति । [ अरेरे दुर्गतिपात्रभूत यमनगरातिथे । न सज्जनेऽनर्थयोगाः प्रभवंति । ]

( पुनर्नेपथ्ये )

आश्चर्यमाश्चर्यम् ।

( सर्वे चकिताः )

**अर्जुनः**—किं नाम भवेत् ।

( पुनर्नेपथ्ये ) केनापि अचिंतितोपस्थितेन रक्षसा पार्थशरच्छिन्नमाकाश उत्पत्य निपतज्जयद्रथशीर्षमुपरित एवोद्धृत्यापनीतम् ।

( सर्वे सविस्मयमवलोकयंति । )

( प्रविश्य )

**शंकुकर्णः**—विएदु महाभाओ अज्जुणो । जअद्दहपिदुणो वुड्ढच्छत्तेण स्सपुत्तस्स आउणो अत्थे तवो तविअ वरो लद्धो जअद्दहभिच्चस्स उलूअस्स मुहादो मए सुदो । जो से मुद्धाणं भूमिम्मि पाडइस्सदि तस्स मुद्धा वि तक्कालं सअहा फलिस्सदि त्ति । अदो अहं किदत्तरो उवगमिअ तच्छिस्सं अंतरिक्खे एव्व उद्धरिअ संझग्घोदअदाणप्पसारिअकरस्स वुड्ढच्छत्तस्स करेसु तं ण्णसिदवं । अलक्खिदोपणअं किं त्ति अजाणंतेण अ तेण संभमेण भूमिम्मि पाडिअं । फलिदो अ सअहा से मुद्धा । सो अहं अणिणो म्हि रक्खिदजीविदस्स महाभाअस्स । [ विजयतां महाभागोऽर्जुनः । जयद्रथपित्रा वृद्धक्षत्रेण स्वपुत्रस्यायुषोऽर्थे तपस्तप्त्वा वरो लब्धो जयद्रथभृत्यस्योलूकस्य मुखान्मया श्रुतः । योऽस्य मूर्धानं भूमौ पातयिष्यति तस्य मूर्धाऽपि तत्कालं शतधा फलिष्यतीति । अतोऽहं कृतत्वर उपगम्य तच्छीर्षमंतरीक्ष एवोद्धृत्य संध्यार्घोदकदानप्रसारितकरस्य वृद्धक्षत्रस्य करयोस्तन्न्यस्तवान् । अलक्षितोपनतं किमित्यजानता च तेन संभ्रमेण भूमौ पातितम् । फलितश्च शतधास्य मूर्धा । सोऽहमनृणोऽस्मि रक्षितजीवितस्य महाभागस्य । ]

कृष्णः—साधु शंकुकर्ण साधु । पुत्रापराधेन क्षीणायुस्तपस्वी वृद्धक्षत्रः ।

( प्रविशंति सुभद्रा धर्मराजः परिवारश्च । )

सुभद्रा—मरणआले जअद्दहमुहणिग्गदां अच्चाहिदवत्तं परंपराए सुणिअ ण मे आसा आसि अत्तणो भागधेएसुं । अच्चरीअं तु रक्खसचरित्तं विजाणिअ जम्मंतरादो विअ लद्धो दसंणीओ मए णाहो । [ मरणकाले जयद्रथमुखनिर्गतामत्याहितवार्तां परंपरया श्रुत्वा न मे आशा आसीदात्मनो भागधेयेषु । आश्चर्यं तु राक्षसचरित्रं विज्ञाय जन्मांतरादिव लब्धो दर्शनीयो मया नाथः । ]

धर्मराजः—अतर्क्यः खलु महिमा भगवतः संविधानस्य ।

कृष्णः—वत्से मा कातरा भूः । एषोऽत्र महोपकारकारी शंकुकर्णः ।

सुभद्रा—अच्चरीआइं इमाइं ण तुवत्तो अण्णो को वि घडेदि । ( कंकणं स्वहस्तादुन्मुच्य राक्षसहस्ते ददाति । ) एसो धम्मबहिणीए दत्तो दे पसाओ । [ आश्चर्याणीमानि न त्वत्तोऽन्यः कोऽपि घटयति एष धर्मभगिन्या दत्तस्ते प्रसादः । ]

राक्षसः—सदेव्व बहिणीए भूसणं कण्णे धारइस्सं । [ सदैव भगिन्या भूषणं कर्णे धारयिष्यामि । ]

धर्मराजः—अहो महोपकृतम् । सर्वे वयं भवच्चारित्रेण पुनरुज्जीविताः स्मः । तदिदमपि गृहाण । ( कटकमस्मै प्रयच्छति । ) भगवन् घटोत्कचसंमितां प्रतिपत्तिस्मद्वाहिनीषु लंभयितव्य उदात्तचरितः शकुंकर्णः ।

कृष्णः—यथेष्टं महाराजस्य ।

अर्जुनः—भगवन् भीष्मद्रोणौ सैंधवापसदं चानुचिंत्य एतत्पश्यामि ।

साध्योऽभूत्स पितामहो युधि ऋजुः प्राणात्ययेऽपि व्रती
साध्यो भाति गुरुश्च मे नयपथं निर्मोहभावः श्रितः
शून्यः सत्त्वगुणेन शाठ्यनिपुणः कूटाश्रयः सैंधवः
तद्दूरे मम सर्वथैव शरणं मायाधिनाथो भवान् ।

कृष्णः—यथार्थमाह वयस्यः ।

विक्रमेण विनयेन गुरू तौ
सात्त्विकाविति रणे सुखसेव्यौ
पापभाक्तु कुटिलो मलिनात्मा
माययैव तव हस्तगतोऽभूत् ।

अपि च

न कौटिल्यमाचर्यते स्वार्थहेतोः
कदाप्येव सत्त्वस्थितैरेष सर्गः
ऋजुत्वेन सर्वस्वनाशेऽपि सिद्धाः
यदा त्वादृशा रक्षणीया मया ते ।

दुष्कृतां विनाशफला च मे माया यामुद्भाव्य सतां माहात्म्यं मया प्रथां नीयते ।

धर्मराजः—भगवतः प्रसादाद्दुस्तरां प्रतिज्ञां वत्स उत्तीर्णः ।

शंकुकर्णः—धण्णा णाम सव्वेवि भअवदो पादप्पसाएण । [ धन्या नाम सर्वेऽपि भगवतः पादप्रसादेन । ]

कृष्णः—(विलोक्य) इदमपरं वः प्रियम् ।

( प्रविशति पुरुषः )

पुरुषः—विजयतां महाराजः । विजयतां महाभागोऽर्जुनः । आर्यविराटः संदिशति अनघप्रसवा वत्सा उत्तरा अद्भुतं पुत्रसंस्थानं ज्योतिः प्रसूता । स च स्फुरत्प्रभामंडलमात्रदर्शनश्चेष्टाशून्यो बालको योगमग्न इव योगिराट् कोऽपि भगवता अचिरात् प्रसाददृष्ट्यानुग्रहणीय इति ।

धर्मराजः—नप्तायं दीर्घायुर्वत्सस्यार्जुनस्यास्माकं वंशवर्धनः । किं नाम निश्चलावयव इति ।

सुभद्र—एव्वं पुण्णा पिदामहासिसा । किं कारणं दु त्थिरसरीरत्तणस्स । (अश्रूणि मुंचति ।) [ एवं पूर्णा पितामहाशीः । किं कारणं तु स्थिरशरीरत्वस्य । ]

कृष्णः—वत्से अलं पूर्वापरस्मरणोद्वेगेन । योगबलेनास्माभी रक्षितशरीरः कुलवर्धन एष पांडूनामचिरात्स्फुरत्संज्ञः सकलानाह्लादयिष्यति ।

धर्मराजः—नमस्ते योगेश्वराय ।

अर्जुनः—सर्वथा भगवानेव पांडूनामाश्रयः । तदाशंकितभवद्योगगतयः क्षंतव्याः स्थूलदृष्टयो वयम् ।

कृष्णः—ननु वयस्य शंकापि खलु अस्मत्प्रभावांतरंगम् । तन्न शुद्धशील आत्मा भवाद्भिर्दूषणीयः । तत्कथय किं ते भूयः प्रियमुपकरोमि ।

अर्जुन—किमतः परं प्रियमस्ति । तथापि इदमस्तु ।

( भरतवाक्यम् ।)

देहात्मत्वोल्बणानां भवतु विषयिणां नास्तिकानां निपातः
संतु प्राधान्यभाजः स्थितिहितमतयः साधवो लोकतंत्रे

भूमौ सर्वत्र धर्मेऽभिरुचिरुदयतां वृद्धवाक्ये स्थितस्य
लोकस्याऽऽस्त्रीकुमारं भवतु च सुकृतैरायुरैश्वर्यवृद्धिः ॥

कृष्णः—तथास्तु ।

( निष्क्रांताः सर्वे । )

इति निर्वहणं नाम सप्तमोऽङ्कः ।

समाप्तमिदं वीरधर्मदर्पणं नाम नाटकम् । कृतिर्दाक्षिणात्यकवेः
परशुरामशर्मणः । शिवम् ॥

